REPRINT FROM THE PANDIT

# जैनेन्द्रव्याकरणम् ।

देवनन्दिविरचितम् ।

अभयनन्दिविरचितमहावृत्तिसहितम् ।
काशीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्य-
क्षमहामहोपाध्यायपण्डितविन्ध्येश्वरीप्रसाद-
द्विवेदिना काशीस्थरणवीरसंस्कृतपाठशाला-
ध्यापकेन व्याकरणाचार्योपाधिकेन गण-
पतिशास्त्रिणा च संशोधितम् ।

काश्याम् ।

मेडिकल्हाल नामके यन्त्रालये संमुद्रय प्रकाशितम् ॥

# Jainendra Vyākaraṇam

WI[illegible]

MAH[illegible]

[illegible] ANANDI

EDITED BY

M[illegible] [illegible]dhyaya Vindhyeswari Prasad.,
[illegible] Sanskrit College, Benares.



Benares.
PRINTED AND PUBLISHED BY H. N. BAGCHI
FOR MESSRS E. J. LAZARUS & Co.
AT THE MEDICAL HALL PRESS,
BENARES CANTT.
1918.



 [Price Rs. 3/8/- मूल्य ३॥)

# जैनेन्द्रव्याकरणम् ।

ङ्याम्मृदः ॥ १ ॥

ङी इति स्वरूपग्रहणम् । आबिति टाप्डापोः सामान्येन ग्रहणम् । मृदितिसंज्ञानिर्देशः अधुमृत् कृत्हृत्साः इति यदित-ऊर्ध्वमनुक्रमिष्यामः आ कपो विधानात् ङ्यन्तादाबन्तान्मृद्रू-पाच्च तद्भवतीत्येवं वेदितव्यम् । ननु वक्ष्यमाणास्त्याः पर इति नियमेन परे प्रयुज्यन्ते धोः परत्वञ्च तव्यादिभिराक्रान्तम् । मिङन्तं च क्रियावाचि सुबन्तमपि पदं क्रियासापेक्षं क्रियात्वभू-तमित्यतः पारिशेष्यात् ङ्याम्मृद एव भविष्यन्ति एवं तर्हि वाक्यान्मा भूवन् वृद्धस्य उपगोरपत्यमिति गुपद्भसं-ज्ञाश्च प्रयोजनम् । द्वन्द्वकारद्व्यजादिग्रहणानि च ङ्याम्मृदः विशेषणानि न समर्थविभक्त्यन्तस्येति अधिकारः क्रियते। द्रु इति मृद्रूपम् । द्रु ज्ञानामपत्यमित्यत्र मृद्रूपापेक्षया वावृद्धा-द्द्रोरिति द्रुलक्षणः फिञ् न भवति अद्रुलक्षण एव फिरदोरिति फिर्भवति । दक्षाणामपत्यमिति मृद्रूपापेक्षया अदन्तलक्षणः इञ् भवति । घटेन तरतीत्यत्र मृदपेक्षया नौद्व्यचष्ठ इति "द्व्यज्-लक्षणष्ठः सिद्धः" वाचा तरतीत्यत्र न भवति । मृद्ग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणमिति सिद्धे ङ्याब्ग्रहणं किम् । कालि-तरा । मालितरा । एनिका । हरिणिका । परमपि हृत बाधित्वा स्त्रीत्यो यथा स्यात् अथ घकपकल्पचेलड्ब्रुवगोत्रमतहते प्रोऽनेकाचः करण इति प्रादेशवचनसामर्थ्यादितल्लभ्यते एवं तर्हि मृद्ग्रहणे लिङ्गविशिष्टस्यापि परिभाषेयमनित्येति ज्ञाप्यते तेन गोमतीति उगिल्लक्षणो नुम्न भवति । युवतीं पश्येति जिन्न भवति । सख्यौ । सख्यः । इति च णिन्न भवति । हे भवति भगवति अघवति इत्यत्र भवद्भगवदघवतोवारिःकावचरिस्यादि

त्येष विधिर्न भवति । इह त्यग्रहणं न कर्तव्यम् । कथं युवतितरा वामोरुतरा । ह्रदंतत्वाद्युवतिशब्दस्य मृत्संज्ञा वामोरुशब्दस्यापि मृदमृदोरेकादेशो मृद्ग्रहणेन गृह्यते । अजादिषु हलन्तादापं विधास्यति डापि च टिखेन भवितव्यमिति एकादेशो नास्ति तस्मात् ङ्याप्ग्रहणं कर्तव्यम् ।

स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ॥ २ ॥

ङ्याम्मृदः स्वादयो भवन्ति । उत्साराद्यनुबन्धनाशः अनेन विहितानां स्वादीनां कर्मणीवित्येवमादिना विभक्तिनियमसाधने स्वार्थ इति वचननियमश्च ज्ञातव्यः । ङ्यन्तात्तु कुमारी । कुमार्यौ । कुमार्यः । कुमारीम् । कुमार्यौ । कुमारीः । कुमार्या । कुमारीभ्याम् । कुमारीभिः । कुमार्यै । कुमारीभ्याम् । कुमारीभ्यः : कुमार्याः । कुमारीभ्याम् । कुमारीभ्यः । कुमार्याः । कुमार्योः । कुमारीणाम् । कुमार्याम् । कुमार्योः । कुमारीषु । आबन्तात् । माला । माले । मालाः । मालां । माले । मालाः । मालया । मालाभ्याम् । मालाभिः । मालायै । मालाभ्याम् । मालाभ्यः । मालायाः । मालाभ्याम् । मालाभ्यः । मालायाः । मालयोः । मालानाम् । मालायाम् । मालयोः । मालासु । एवमावंतात् । दामाबहुराजादयो नेयाः । मृदः दृषद् । दृषदौ । दृषदः । दृषदम् । दृषदौ । दृषदः । दृषदा । दृषद्भ्याम् । दृषद्भिः । दृषदे । दृषद्भ्याम् । दृषद्भ्यः । दृषदः । दृषद्भ्याम् । दृषद्भ्यः । दृषदः । दृषदोः । दृषदाम् । दृषदि । दृषदोः । दृषत्सु ।

स्त्रियाम् ॥ ३ ॥

स्त्रियामिति प्रकृतिविशेषणम् । यदित ऊर्द्ध्वमनुक्रमिष्यामः स्त्रियां वर्तमानान्मृदः स्वार्थे तद्वेदितव्यम् यदि स्त्रियाम-

भिधेयायामिति स्यात् द्विबहून स्याताम् । कुमार्यौ कुमार्य इति एकत्वात् स्त्रीत्वस्य अनेकत्वयोत्पत्तिश्च न स्यात् । कालितरा । भावप्रधानत्वात् स्त्रियामितिनिर्देशस्य कुमारी देवदत्तेति सामानाधिकरण्यं च न स्यात् । अथापि स्त्रीसमानाधिकरणान्मृद इत्यभ्युपगम्येत एवमपि भूतमियं नारी । कारणमियं कन्या । आवपनमियमुष्ट्रिकेति भूतशब्दादिषु स्त्रीत्वाः प्रसज्येरन् तस्मात् स्त्रियां वर्तमानान् मृद इत्येवाधिकृतम् । वक्ष्यति अजा । देवदत्ता । स्त्रियामिति किम् । अजो देवदत्तः । शब्दजनितप्रत्ययवर्गाः स्त्रीत्वादय इहाभिप्रेताः न वस्तुवर्गाः अव्याप्तेः शब्दो हि श्रोत्रपथं गतो लिङ्गसंख्यावन्तं स्वप्रत्ययं जनयति स प्रत्ययः । खट्वादिषु रसादिषु अभावादिषु च शब्देषु संभवति ।

अजाद्यतष्टाप् ॥ ४ ॥

अजादिभ्यः अकारान्तेभ्यश्च मृदः स्त्रियां वर्तमानेभ्यष्टावित्ययं त्यो भवति । पकारः टाप्डापोः सामान्यग्रहणार्थः । टकारः सामान्यग्रहणाविघातार्थः अन्यथा एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति विघातः स्यात् । बाधकबाधनार्थमनकारान्तार्थं च अजादिग्रहणम् । अजा । एडका । अश्वा । चटका । मूषिका । जातेरयोदुङित्यस्यापवादः । बाला । होढा । पाका । वत्सा । मन्दा । विलाता । वयस्यनंत्यङित्यस्य प्राप्तिः । पूर्वापहाणा । अपरापहाणा । टिड्ढक्षणस्यापवादः । निपातनाराणत्वम् । संभस्त्राजिनसणपिंडेभ्यःफलादाप् । संफला । भस्त्राफला अजिनफला । सणफला । पिंडफला । सत्प्राक्काण्डप्रान्त शतैकेभ्यः पुष्पादाप् । सत्पुष्पा । प्राक्पुष्पा । काण्डपुष्पा प्रांतपुष्पा । शतपुष्पा । एकपुष्पा । पाककर्णपर्णपुष्पफलमूलवालधोरित्यस्यापवादः । शूद्राचामहत्पूर्वात् जाति-

स्यात् प्रत्याहारादापा सिद्धम् । दोषस्त्विहत्वे तस्मान्नोभौ स्वस्रादिभ्यः स्वसा । दुहिता । स्वसृदुहितृननांदृयातृमातृतिसृचतसृ ।

मनोड्डाप् च ॥ ९ ॥

ङी इति वर्तते । नेतिच। मनन्तान्मृदः स्त्रियां वर्तमानाड्डाप् भवति ङीप्रतिषेधश्च । डकारः टिखार्थः । पकारः सामान्यग्रहणार्थः । पामे । पामाः पामानौ । पामानः । अनिनस्मनं ग्रहणेष्वर्थवता चानर्थकेन च तदन्तविधिः । सीमे । सीमानौ । सुप्रथिमे । सुप्रथिमानौ । अतिमहिमे । अतिमहिमानौ ।

अनश्च वात् ॥ १० ॥

अन्नतात् वसात् स्त्रियां वर्तमानात् डाप् भवति ङीप्रतिषेधश्च । चकारो ङीप्रतिषेधानुकर्षणार्थः । अर्थवतोऽनर्थकस्य चानोग्रहणम् अनुड्वतो वसस्येहोदाहरणम् । उड्वन ऐरूप्यं वक्ष्यति । सु र्वे । सुपर्वाः । सुपर्वाणौ । सुपर्वाणः । नकारान्तत्वाट्टीप्रसज्येत ।वादिति किम् । अतिक्रान्ता पर्वाणि अतिपर्वणी ।

वोङ्ङ् ॥ ११ ॥

अन्नन्ताद्वसात् उङःखे वर्तमानात् डाप्ङीप्रतिषेधौ वा भवतः । वावचनाद्यथाप्राप्तः । नकारान्ताङ्ङीविधिः वनोह्नसेोरश्चेत्यभ्यनुज्ञायते बहुराजे । बहुराजाः । बहुराजानौ । बहुराजानः । बहुराज्ञ्यौ । बहुराज्ञ्यः । बहुतक्षे । बहुतक्षाः । बहुतक्षाणौ । बहुतक्षाणः । बहुतक्ष्णौ । बहुतक्ष्णः । बहुधीवेख बहुधी वा । बहुधीवानौ बहुधीवानः । बहुधीवर्यौ । बहुधीवर्यः । उङ्ङ इति किम् । सुपर्वा । सुपर्वाणौ । पूर्वेण द्वैरूप्यम् । अन इत्येव ।

सुमत्स्या नदी ।

डीखौ ।

खविषये । अन्नतात् बसात् ङी भवति । अधीराज्ञी नाम ग्रामः । पुनर्ङीग्रहणं नित्यार्थम् ।

ऊधसः ॥ १३ ॥

वादिति वर्त्तते । ऊधःशब्दान्ताद्बसात् ङी भवति । कुण्डमिवोधो यस्याः कुण्डोध्नी । द्वेऊधसी यस्या द्व्यूध्नी । निर्गतमूधोऽस्या निरूध्नी । ऊधसोनङिति अनङ्सान्तः ब ह्वङिति त्रैरूप्यं प्राप्तम् । स्त्रियामेवानङ्सान्त इत्येव इह मा भूत् महोधाः । पर्जन्यः । वादित्येव प्राप्ता ऊधः प्राप्तोधा गौः । इपा च प्राप्तापन्न इति षसः । तत्रैव पूर्वंलक्षम व्याख्यातम् ॥

दामहायनात्संख्यादेः ॥ १४ ॥

संख्यादेर्बसात् दामान्तात् हायनांताच्च ङी भवति । द्विदाम्नी । त्रिदाम्नी । वं ङख इति त्रैरूप्यं । प्राप्तम् । हायनाद्वयसि स्मृतः द्विहायनी । त्रिहायणी । चतुर्हायणी वत्सा । त्रिचतुर्भ्यां हायनस्य णत्वमपि वयसीष्यते तेनेह ङीविधिर्णत्वं च न भवति । द्विहायना । त्रिहायना । चतुर्हायना शाला । संख्यादेरिति किम् । उद्दामा वडवा । वोङ्ख इत्यनेन त्रैरूप्यं भवति ।

पादो वा ॥ १५ ॥

पादशब्दान्तान्मृदः स्त्रियां वर्तमानाद्वा ङी भवति । द्विपात् । द्विपदी । त्रिपात् । त्रिपदी । सुसंख्यादेरिति पादशब्दस्य खम् । पादयतेंः क्विबन्तस्य प्रयोगो नास्ति ।

टाबृचि ॥ १६ ॥

पाद इति वर्तते पादशब्दान्तान् मृदः टाब् भवति ऋच्यभिधेयायाम् । द्विपदा ऋक् । त्रिपदा ऋक् । ऋचीति किम् । द्विपदीदेवदत्ता ।

अनीचः ॥ १७ ॥

न्यक्छब्दोऽत्राप्रधानवचनः नञ्पूर्वः यदित ऊर्ध्वमनुक्रमिष्यामः अनीच इत्येव तद्वेदितव्यम् । नीचो ङ्यादयो न भवन्तीत्यर्थः । वक्ष्यति टिड्ढाणञिति । कुरुचरी । मद्रचरी । जातेरयोङः । कुक्कुटी । शूकरी । अनीच इति किम् । बहुकुरुचरा । बहुकुक्कुटा मथुरा । ननु पूर्वत्र समुदायः स्त्रियां वर्तते नावयवः अवयव एव च टित्न समुदायः । द्वितीयेऽपि विसेन समुदायो जातिवाची किं त्ववयवः तत्कथं प्राप्तिः इदमेव ज्ञापकं भवत्यत्र प्रकरणे तदन्तविधिरिति तथाहि प्रधानभूतेन तन्दतविधिः कुम्भकारी देवदत्त कुक्कुटी यद्येवं पूर्वमेवेदं सूत्रं वक्तव्यम् । इह करणात् पूर्वोक्तविधिर्नीचोऽपि भवतीति ज्ञाप्यते बहुधीवरी बहुपीवरीति ।

टिड्ढाणञ्ठण्ठञ्क्वरपः ॥ १८ ॥

अत इति वर्तते । टित् ढ अण् अञ् ठण् ठञ् क्वरप् इत्येवमन्तेभ्यः स्त्रियां ङी भवति । टापोऽपवादः । अनीच इत्यधिकारात् प्रधानेन तन्दतविधिरुक्तः । कुरुचरी । भद्रचरी । कृद्ग्रहणेति कारकपूर्वस्यापि ग्रहणं न मन्तव्यम् । इह कृदकृतोर्ग्रहणात् । ढ । सौपर्णेयी । वैनतेयी । शिलाया ढ इत्यस्य निरनुबन्धकस्य स्त्रियामभिधानं नास्ति । अण् । कुम्भकारी । कुपगवी । कथं चुराशीला चौरी । तपःशीला तापसी । णोऽव्ययणकृतं भवतीति वक्ष्यति । अञ् औत्सी । वैदी । ठण् । तान्तिकी । रौचनिकी । ठञ् । पारायणं वर्तयति पारायणिकी । प्राग्वतेष्ठञ् । क्वरप् । इत्वरी । नश्वरी । अनीच इत्येव । बहुकुरुचरा । ल्युट्प्रभृतीनां द्व्यनुबन्धकत्वेऽपि टित्करणसामर्थ्यात् ग्रहणम् ।

लकाराणां स्थानिवद्भावात्टित्वं ङित्वं च न भवतीत्युक्तम् । पचमाना स्त्री । अविनवंत्यसाहचर्यादागमस्य न ग्रहणम् । लिखिता विद्येति ।

यञः ॥ १९ ॥

यञन्तान्मृदः स्त्रियां ङी भवति । गार्गी । वात्सी । हलोहृतोङ्यामिति यकारस्य खम् । द्वीपादनुसमुद्रेऽयञिति अयञ् । ञ्यनुबन्धकः तस्येहाग्रहणम् । द्वीपे भवा द्वैप्या । योगविभाग उत्तरार्थः ।

फट् ॥ २० ॥

यञ इति वर्तते । यञन्तान्मृदः स्त्रियां फडित्ययं त्यो भवति । टकारो ङ्यर्थः । अथ गार्गायण इति स्थिते फटोहृत्संज्ञाविरहात् कृद्धृत्सा इति मृत्संज्ञा नास्ति । कथं ङीविधिः । टित्करणसामर्थ्यात् भविष्यति गार्ग्यायणी । वात्स्यायनी । आवट्यायनी । वचनात्पूर्वोऽपि विधिर्भवति । गार्गी । वात्सी ।

लोहितादिसकलान्तात् ॥ २१ ॥

यञ इति वर्तते । लोहितादिर्गर्गादिष्वन्तर्गणः । लोहितादिभ्यः सकलशब्दपर्यन्तेभ्यः यञन्तेभ्यः स्त्रियां फट् त्यो भवति । पुनरारम्भो नित्यार्थः । तेन फडेव भवति यञः इत्यनेन ङीः प्राप्तो निवर्त्यते । लौहित्यायनी । सांशित्यायनी । बाभ्रव्यायनी । सौक्षव्यायणी । सांचव्यायणी । लांतव्यायणी । जैगीषव्यायणी । मानव्यायनी । मांतव्यायनी । मनायीशब्दस्य पाठसामर्थ्यात् स्यहृत्यटे इति पुंवद्भावो न भवति । मानव्यायनी । कात्यंव्यायनी । रौक्ष्यायणी । तारुक्ष्यायणी । तालुक्ष्यायणी । ताण्ड्यायनी । वातण्ड्यायनी । आंगिरसेतु वतण्डीत्येव भवति । काप्यायनी । कात्यायनी । साकल्यायनी ।

कौरव्यासुरिमाण्डूकात् ॥ २२ ॥

कौरव्य आसुरि माण्डूक इत्येतेभ्यः फट् भवति । कौरव्यायणी । टाप्प्राप्तः । अआसुरीति प्रश्लेषनिर्देशात् अकारप्रत्यान्तादेशः आयनादेशो नस्वेकोदीत्वार्थः । अहृत्वाद्यस्य ङ्यांचेति इत्वं प्राप्नोति । आसुरायणी । इतोमनुष्यजातेरिति ङीत्यः प्राप्तः । मण्डूकस्यापत्यं स्त्री माण्डूकायनी । फट् मण्डूकादित्यण् । ङी प्रसज्येत तस्येदमित्यणि विवक्षिते कौरवीति भवति । शैषिकार्थेविवक्षायां इञश्चेत्यणि प्राप्ते दोश्छ इष्यते । आसुरिणा प्रोक्ता आसुरीया शिक्षा ।

गौरादेः ॥ २३ ॥

गौरादिभ्यः स्त्रियां ङी भवति । गौरी । वर्णत्वे बहुलं ङीप्राप्तेः संज्ञायामप्राप्तेः । गौर मत्स्य मनुष्य शृङ्ग गवय हय मुकय ऋष्य अयो ङ इति ङीप्रतिषेधः प्राप्तः । शृङ्गाट्टाप् प्राप्तः । एवमुत्तरत्राप्यूह्यम् । पुट पद् द्रुण द्रोण हरिण कर कर्ण अरोहण वरट उणक आमलक कुवल वदर बिल्व विंव कक्क तर्क्कार सर्क्कार षष्कण्ड सवल सुषव पांडसौकेषांचित् सालंद गडुल पडुश आटक आनन्द सपाट षष्कुल सूर्य्य गूष मूष घातक सल्लक मालक मालत साल्वक वेतस वृत अतस उमा भङ्ग मह मठ वेद स्वन् भषण् अनडुही अनड्वाही एषणात्करणे कारके देह मेधीकाकादनगवादनादयः यान मेध गौतम आयस्थूण भौरिक भौजिकि भौलिंगि औद्गाहमानि आलम्बि आयामक आलब्धि आपाच्यांङ्क ऊपस्तश्च आरट टोट नट मूलाट आसूरण अधिका प्रत्यवारोहिन् आग्रहायण अग्रहायनस्य-स्वार्थे अण् णत्वं च निपात्यते। सेवनी सुमंगला संज्ञायां सुन्दर पंडल मंदर मदुल पेट पिट पिंड ऊर्द गूर्द मूर्द्र केषांचित् रेफा-

त्परो मकारः ह्रींर्द भांडा लोहांड कदर कंदर कदल कंदल तरुण तलुन सौधर्म्म रोहिणी रेवती च नक्षत्रे विकल निष्कल पुष्कल कटाच्छोण्याम् । पिप्पल्यादयश्च पिप्पली हरीतकी कोशातकी समी करीरी पृथिवी क्रोष्ट मातामह पितामही एही पर्येही अस्मरथ्यात्युट् प्राप्तः काव्या शैव्या एतौ व्यांतौ आरोह चंड नृनरयोरैपूच । नारी । येऽत्रानडुही-प्रभृतय ईकारान्ताः पठ्यन्ते तेषां से पुंवद्भावो न भवति । अन-डुहीभार्यः । प्रत्यवरोहिणीभार्यः । आग्रहायणीभार्यः इति ।

## वयस्यनन्त्ये ॥ २४ ॥

प्राणिनां कालकृता शरीरावस्था वयः । वयस्यनन्त्ये वर्त-मानान्मृदः स्त्रियां ङीत्यो भवति । कुमारी । किशोरी । बकरी । वधूटी । चिरण्टी । तरुणी । तलुनी । अनन्त्य इति किम् । स्थविरा । वृद्धा । कन्याया कनीन च इति निपातनात् कन्या । अत इत्येव शिशुः । उत्तानशया लोहितपादिका द्विवर्षा त्रिवर्षा नैते साक्षाद्वयोवाचिनः शब्दाः । अथवा द्विवर्षादिषु परिमाणा-द्धृदुपीत्येतस्मान्नियमात् न भविष्यतीति ।

## रात् ॥ २५ ॥

रसंज्ञकान्मृदः स्त्रियां ङीत्यो भवति । अकारान्तोत्तर-पदो रः स्त्रियां भाष्यते । पञ्चानां पूलानां समाहारः पञ्चपूली । दशपूली । अन्नंतस्य रसस्य खं स्त्रियां चेति पञ्चतक्षी दसतक्षी । पञ्चाजी । अजादिष्वजशब्दो जातिवचनो ऽभिप्रेतः । कथं त्रिफला अजादिषु पाठात् ।

## परिमाणाद्धृदुपि ॥ २६ ॥

सर्वतो मानं परिमाणम् । परिमाणान्तात् रात् हृदुपि सति ङीत्यो भवति । द्वाभ्यां कुडवाभ्यां क्रीता आर्हीयस्य त्यस्य

राद्वखादित्युप् द्विकुडवी । द्व्याढकी । त्र्याढकी । रादिति सिद्धे नियमार्थोऽयम् । यतः परिमाणादेव ह्रदुपि नान्यतः । पञ्चभिरश्वैः क्रीता पञ्चाश्वा दशाश्वा तुल्यजातीयस्य नियमान्निवृत्तिः । समाहारे भवत्येव । पञ्चाश्वी । परिमाणादिति योग विभागः कर्तव्यः । तत इष्टतोवधारणं लभ्यते परिमाणशब्देनेह रूढिवशात् प्रस्थादिर्गृह्यते । कालसंख्ययोरग्रहणम् । तेन द्विवर्षा । त्रिवर्षा । द्विशता । त्रिशता । द्वे वर्षे प्रमाणमस्याः प्रमाणेऽध्वंसनं राञ्चेति द्व्यहादीनामुप् । उक्तं च उर्द्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ।

## न बिस्ताचितकम्बल्यात् ॥ २७ ॥

बिस्त आचित कम्बल्य इत्येवमन्तात् रात् ह्रदुपि ङीरयो न भवति । बिस्तादीनां परिमाणत्वात् सर्वेण प्राप्तिः द्वाभ्यां बिस्ताभ्यां क्रीता द्विबिस्ता । त्रिबिस्ता । द्व्याचिता । त्र्याचिता । द्विकम्बल्या । त्रिकम्बल्या ।

## काण्डात् क्षेत्रे ॥ २८ ॥

काण्डशब्दान्तात रात् ह्रदुपि सति क्षेत्रेऽभिधेये ङीरयो न भवति । द्वे काण्डे प्रमाणमस्या द्विकाण्डा त्रिकाण्डा क्षेत्रभक्तिः । प्रमाणे द्व्यसड्दघ्नट्मात्रट् इत्यागतानां द्व्यसडादीनां प्रमाणे ध्वंसनं राञ्चेति वक्ष्यमाणया इष्टया उप् कांडं धनुः तस्य परिमाणशब्देनासंगृहीतमतः परिमाणाद्‌धृदुपीत्यनेन नियमेन प्रतिषेधे सिद्धे नियमार्थमिदम् । क्षेत्र एव प्रतिषेधो भवति नान्यत्र । द्विकाण्डी । त्रिकाण्डी रज्जुः । रादितिङी विधिः ॥

पुरुषात्प्रमाणे वा ॥ २९ ॥

हृद्र्वीति वर्तते प्रमाणे यो वर्तते पुरुषशब्दः तदन्ताद्रात् हृदुपि वा ङीत्यो भवति। द्वौ पुरुषौ प्रमाणमस्याः खातायाः द्वयसङादीनां प्रमाणे ध्वंमनेराच्चेति उप्। द्विपुरुषा द्विपुरुषी । त्रिपुरुषी । त्रिपुरुषा । अपरिमाणत्वात्पुरुषस्य परिमाणाद्ध्दृदुपीतिनियमान्निवर्तितो ङीत्यो विकल्पते। प्रमाण इति किम्। द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा । हृदुपीत्येव । समाहारे पञ्चपुरुषी ॥

गुणोक्तेरुतोखरुस्फोडः ॥ ३० ॥

वेति वर्तते। गुणोक्तेर्मृदः उकारांतात् वा ङीत्यो भवति खरुशब्दं स्फोडं च वर्जयित्वा। यः शब्दो गुणे वर्तित्वा द्रव्ये वर्तते स गुणोक्तिरित्युच्यते। पटुः। पट्वी। मृदुः। मृद्वी। गुणोक्तेरिति किम्। आखुः। जातिशब्दोऽयम्। उत इति किम्। शुचिरियं कन्या। अखरुस्फोड इति किम्। खरुरियं कन्या। पाण्डुरियं कन्या। सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः। सत्वं द्रव्यं तत्र निविशते उत्पद्यते आश्रयति वा स गुण इति संबंधः। द्रव्याद्वैति अपगच्छति यथाम्रात् हरितता पीततायां उत्पन्नायां पृथग्जातिषु दृश्यते यथा सैव हरितता तरुणतृणेषु आधेयः उत्पाद्यः यथा कुसुमयोगात् गन्धो वस्त्रे यथा वा घटे रक्तता अक्रियाजश्च क्रियाजश्च क्रियातो नोत्पद्यते यथा कांस्यादिषु महत्वादि चकारात् क्रियाजश्च यथा संयोगो विभागो वा असत्वप्रकृतिः द्रव्यस्वभावरहितः निर्गुण इत्यर्थः ॥

बह्वादेः ॥ ३१ ॥

वेति वर्तते बहु इत्येवमादिभ्यश्च मृद्व्यः स्त्रियां वा

ङीत्यो भवति । बहुः । बह्वी । पद्धतिः । पद्धती । बहु पद्धति अञ्चति अङ्कति अंहति शकटि शक्ति केचिच्छस्त्रेर्थे शक्ति पठन्ति सामर्थ्ये शक्तिरेव तेषाम् शस्त्रि सारि राति राधिशाद्दि अहि कपि मुनि यष्टि किमर्थमिकारान्ता पठ्यन्ते यावता कृदिकारादक्तेरित्येव सिद्धं पद्धतिशब्दान्न स्यात् इतरेभ्यश्चाव्युत्पत्तिपक्षो इतः प्राण्यङ्गात् श्रोणिः श्रोणी धमनिः । धमनी । इत इति किम्, ग्रीवा । प्राण्यङ्गादिति किम्, कौणिः । सारणिः । कृदिकारादक्तेः भूमिः । भूमी । अक्तेरिति किम् । कृतिः । हृतिः । अकार्थाविरत्येके इहापि मा भूत् अकरणिहन्तेर्वृषल कृदिकारादिति किम् । सुगन्धिः । सुरभिगंधिः । स्त्रीहृतो न भवति । व्युत्पत्तिपक्षे कृदिकारस्यैव पूर्वः प्रपंचः । चंड अराल कमल कृपण विकट विशाल विशंकट भरुज चन्द्रभागान्नद्याम् कल्याण उदार पुराण अहःशब्दस्येह पाठोऽनर्थकः केवलस्य स्त्रियामवृत्तेः सविधौतु उत्तरपदभूतस्य दोङ्ख इत्यनेनैव त्रैरूप्यं सिद्धम् । बहुशब्दस्य गुणवाचित्वात्पूर्वेणैव विकल्पे सिद्धे द्विबंहु सुबहु भवतीति पुनर्ग्रहणम् । तेन शकृद्धक्तो अणांताङीविधिः क्वचिन्न भवति । कामिकेति ।

पतिवत्न्यन्तर्वत्न्यौ ॥ ३२ ॥

पतिवत्नी अन्तर्वत्नी इत्येतौ शब्दौ निपात्येते पतिःमच्छब्दस्य ङीत्ये परतः मतोर्वत्वं नुमागमश्च निपात्यते जीवति भर्तरि पतिवत्नी । जीवत्पतिरित्यर्थः । अन्यत्र पतिमती पृथवी । अंतःशब्दादधिकरणप्रधानात् अस्तिसमानाधिकरण्याभावात् विहितोमतुर्नुक् च निपात्यते गर्भिण्याम् । अन्तर्वत्नी गर्भिणी । अन्यत्र अन्तरस्यामस्ति शालायाम् । उक्तं च । पतिवत्न्या नुक्‍ वत्वमन्तवत्न्यामतुर्नुका । जीवत्पत्यां च गर्भिण्यां यथासंख्यं निपात्यते ।

पत्नी ॥ ३३ ॥

पत्नीति निपात्यते पतिशब्दस्य स्त्रियां नकारो अंतादेश पुंयोगे निपात्यते ङीत्यो नकारान्तत्वादेव भवति । इयमस्य पत्नी । अस्य पुंसः वित्तस्य स्वामिनीत्यर्थः । पुंयोगादन्यत्र पतिरियमस्य ग्रामस्य ।

सपत्न्यादौ ॥ ३४ ॥

सपत्न्यादिषु पत्नीशब्दो निपात्यते वाम इति विभाषया पत्नीशब्दस्य निपातने प्राप्ते नित्यार्थं वचनम् । समानः पतिरस्याः सपत्नी । यद्येवं पत्नीति वर्तते समानादिभ्य इति वक्तव्ये यन्नकारेकारस्य समुदायस्योच्चारणं किमर्थम् । समानशब्दस्य सभावार्थं इकारापायेपि नकारश्रवणार्थं च । सपत्न्याः अयं सापत्न्यः । कृतेकारस्योच्चारणं पुंवद्भावप्रतिषेधार्थमित्येके सपत्नीभार्यः । एवं एकपत्नी । वीरपत्नी । विडपत्नी । पुत्रपत्नी । भ्रातृपत्नी ।

वा से ॥ ३५ ॥

से पत्नी वा निपात्यते पतिशब्दान्तस्य मृदः स्त्रियां वा नकारः अन्तादेशो निपात्यते । वसे षसे वेदं निपातनम् । अनीच इति नाभिसम्बध्यते गृह्यमाणस्य शब्दस्याभावात् । वासे दृढः पतिरस्या दृढपतिः । दृढपत्नी । स्थिरपतिः । स्थिरपत्नी । वृद्धपतिः । वृद्धपत्नी । स्थूलपतिः । स्थूलपत्नी । षसे ग्रामस्य पतिः ग्रामपतिः । ग्रामपत्नी । अप्राप्ते विकल्पोऽयम् । पुंसा योगे पत्नीति नित्यं निपातनम् । तेन पत्नीशब्देन तासे राजपत्नीत्येव भवति । स इति किम् । पतिरियमस्य ग्रामस्य ।

वर्णाद्बहुलं तोनस्तु ॥ ३६ ॥

वर्णवाचिनो मृदः स्त्रियां बहुलं ङीत्यो भवति तका-

रस्य तु नकारादेशः तुशब्दः किमर्थं बहुलं ङीविधिर्भवति तकारस्य तु नकारो नित्यं यथा स्यादित्येवमर्थः । एता । एनी । श्येता । श्येनी । रोहिता । रोहिणी । हरिता । हरिणी । शबली । पिशङ्गी । कल्माषी । सारंगी । काली संज्ञायां वर्णे च । काला अन्या । क्वचिदप्रवृत्तिरेव श्वेता । असिता । पलिता । कृष्णा । कपिला । क्वचिदुभयथा । शोणी । शोणा । वडवा । नीली औषधिः । प्राणिनि च नीली वडवा । नीली गौः । संज्ञायामुभयम् । नीली । नीला । आच्छादने न भवत्येव । नीला शाटी । नीला मेघसंहतिः । वर्णादिति किम् । कृता । हृता । अत इत्येव । सितिः कन्या ।

कुण्डगोणस्थलभाजनागकुशकामुककबरादमत्रावपनाकृत्रिमाश्राणास्थौल्यायोविकारमैथुनेच्छाकेशवेशेषु ॥ ३७ ॥

कुण्डादिभ्यः कबरशब्दपर्यन्तेभ्यः अमत्रादिष्वर्थेषु यथासंख्यं स्त्रियां ङीत्यो भवति । कुण्डी भवति अमत्रं चेत् कुण्डा अन्या दाह इत्यर्थः । गोणी भवति आवपनं चेत् गोणा अन्या । संज्ञैषा । स्थली भवति अकृत्रिमा चेत् स्थला अन्या । भाजी भवति श्राणा चेत् भाजा अन्या । भाजयतेः स्त्रियां युचि प्राप्ते अत एव निपातनादकारः । नागी भवति स्थौल्यं चेत् नागा अन्या । तन्वी दीर्घा वा संज्ञायां वा । जातिविवक्षायां तु नित्यं ङी । कुशी भवति अयोविकारश्चेत् कुशा अन्या काष्ठादिमयी तदाकृतिः । कामुकी भवति मैथुनेच्छा चेत् कामुका अन्या । कबरी भवति केशवेशश्चेत् कबरा अन्या ।

पुंयोगात् खोऽगोपालकादेः ॥ ३८ ॥

अत इति वर्तते पुंयोगाद्धेतोर्यः शब्दः स्त्रियां वर्तते खभूतः तस्मात् ङीत्यो भवति गोपालकादीन् वर्जयित्वा । यथा-

ध्यायस्य स्त्री उपाध्यायी । गणकी । प्रष्ठी । महामात्री । एते संज्ञाशब्दा पुयोगात् स्त्रियां वर्तते । पुंयोगादिति किम् । देवदत्ता । खोरिति किम् । प्रसूता । प्रजाता । परिभ्रष्टा । पुंयोगादेते शब्दाः स्त्रियां वर्तन्ते न तु पुंसि संज्ञाभूताः । अगोपालकादेरिति किम् । गोपालिका । पशुपालिका । आदिशब्दः प्रकारवाची । तेन सूर्याद्देवतायां ङीर्न भवति । सूर्यस्य भार्या सूर्या । देवतायामिति किम् । सूर्यो नाम मनुष्यः तस्य सूरीति ।

## पूतक्रतोरैच ॥ ३९ ॥

पुंयोगादिति वर्तते । पूतक्रतुशब्दात्तु ङीत्यो भवति ऐकारश्चान्तादेशः । पूतक्रतोः स्त्री पूतक्रतायी । पुंयोगादित्येव । पूताः क्रतवो यस्याः सा पूतक्रतुः ।

## वृषाकप्यग्निकुसितकुसीदात् ॥ ४० ॥

ऐचेति वर्तते पुंयोगादिति च । वृषाकपि अग्नि कुसित कुसीद इत्येतेभ्यः स्त्रियां ङीत्यो भवति ऐकारश्चान्तादेशः । वृषाकपायी । अग्नायी । कुसितायी । कुसीदायी । कुसितकुसीदयोः संज्ञाशब्दत्वात् पूर्वेणैव सिद्धेऽप्यैकारार्थं वचनम् । पुंयोगादित्येव । वृषाकपिर्नाम काचित् ।

## मनोरौ च ॥ ४१ ॥

पुंयोगादिति वर्तते औकारश्चान्तादेशः ऐकारश्च । मनोः स्त्री मनावी । मनायी । केषांचिन्मनुरित्यपि ॥

## वरुणभवसर्वरुद्रेन्द्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४२ ॥

वरुणादिभ्यो मृद्भ्यो ङीः स्त्रियां त्यो भवति आनुगागमः। अत्र केषांचिच्छब्दानां पुंयोगादिति सिद्धेऽप्यानुगर्थं ग्रहणम् ।

वरुणानी । भवानी । सर्वाणी । रुद्राणी । इन्द्राणी । मृडाणी । हिमारण्ययोर्महत्त्वे । महद्धिमं हिमानी । महदरण्यमरण्यानी । यवाद्दोषे । सदोषो यवः यवानी । यवनाल्लिप्याम् । यवनानां लिपिः यवनानी । उपाध्यायमातुलाभ्यां वा । आनुकएवायं विकल्पः । उपाध्यायी । उपाध्यायानी । मातुली । मातुलानी । आचार्यादणत्वं च । आचार्यानी । अचार्या । आर्यक्षत्रियाभ्यां अपुंयोगे वेति वक्तव्यम् । आर्याणी । आर्या । क्षत्रियाणी । क्षत्रिया । अपुंयोग इति किम् । आर्यस्य भार्या आर्यी । क्षत्रियस्य भार्या क्षत्रियी । आनुगिति द्विमात्रोच्चारणमिष्टिसंग्रहार्थम् ।

क्रीतात्करणादेः ॥ ४३ ॥

क्रीतशब्दान्तान्मृदः करणादेः स्त्रियां ङीत्यो भवति । वस्त्रेण क्रीयते या वस्त्रक्रीती । वसनक्रीती । साधनंकृताबहुलमित्यत्र बहुलवचनात्समासः । तिवाक्कारकाणां कृद्भिः सविधिः प्राक्सुबुत्पत्तेरिति करणवाचिशब्दस्य क्रीतशब्देन सविधिः । पश्चादकारान्तलक्षणो ङीविधिः । करणादेरिति किम् । सुक्रीता । दुःक्रीता । शाङ्दुडोत्यपुम्महुस इति सत्यत्वे कथं सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी बहुलवचनादन् सुबन्तेन वृत्तिर्न कृदन्तेन सुबुत्पत्तिश्च वहिरङ्गा अन्तरङ्गे टापि कृते भवतीति सिद्धम् । क्रीतान्तान्मृद इति विशेषणात् वाक्येन भवति, वस्त्रेण क्रीता ।

क्तादल्पे ॥ ४४ ॥

करणादेरिति वर्तते । करणादेर्मृदः क्तान्तात् अल्पे ङीत्यः भवति । अत्रापि प्राक् सुबुत्पत्तेः सविधिः । अभ्रविलिप्ती द्यौः । अल्पान्यस्यामभ्राणीत्यर्थः । सूपविलिप्ती पात्री, अल्प इति किम् । चन्दनानुलिप्ता ।

जातेर्वा ॥ ४५ ॥

क्तादिति वर्तते। जातिशब्दपूर्वः क्तान्तो यो बसः तस्मात् ङीत्यो भवति। अस्वाङ्गादेरुत्तरत्र विकल्पो वक्ष्यते । स्वाङ्ग पूर्वपदमिहोदाहरणम् । शङ्खौ भिन्नौ यस्याः सा शङ्खभिन्नी । ऊरुच्छिन्नी । गलकोत्कृत्ती । केशलूनी । जातेरिति किम् । मासजाता । बहुजाता । अजाता । सुखजाता । दुःखजाता । वादिति किम् । सव्यजानुप्रतिष्ठिता । जातान्तात्प्रतिषेधो वक्तव्यः । दन्तजाता । स्तनजाता । पाणिगृहीत्यादीनां गुर्वनुज्ञातेन ङीवक्तव्यः । पाणिगृहीती भार्या। यस्यास्तु यथाकथंचित् पाणिर्गृहीतः सा पाणिगृहीता । तदितिदतोक्तं जीवतिकालसुखादिभ्यः परनिपातः तान्तस्येति जातिरत्र सकृदाख्यातनिर्ग्राह्या ॥

वा ऽस्वाङ्गादेः ॥ ४६ ॥

क्तादिति वर्तते । वादिति च अस्वाङ्गादेः क्तान्ताद्बसात् वा ङीत्यो भवति । सागरं जङ्घमनया सागरजङ्घी । सागरजङ्घा । पलाण्डुभक्षिती । पलाण्डुभक्षिता । सुरापीती । सुरापीता । अस्वाङ्गादेरिति किम् । शंखभिन्नी । स्वाङ्गादेः पूर्वेण नित्यो विधिः । वेति व्यवस्थितविभाषा तेनेह न भवति । वस्त्रं छन्नमस्याः वस्त्रछन्ना । वसनच्छन्ना । पक्षेपि संज्ञायां विकल्पः । प्रवद्धविलूनी । प्रवद्धविलूना ॥

स्वाङ्गान्नीचोस्फोडः ॥ ४७ ॥

वेति वर्तते । स्वाङ्गं न्यक् अस्फोड् यत् तदन्तान्मृदः वा ङीत्यो भवति । दीर्घकेशी । दीर्घकेशा । गौरमुखी । गौरमुखा । स्वाङ्गादिति किम् । बहुयवा । अस्फोड इति किम् । कल्याणगुल्फा । कल्याणपार्श्वा । वेतिव्यवस्थितविभाषा व्याख्याता ।

तेनअङ्गगात्रकण्ठेभ्यो वा प्रतिषेधः । मृद्वङ्गी । मृद्वङ्गा । मृदुगात्री । मृदुगात्रा । स्निग्धकण्ठी । स्निग्धकण्ठा । वमाधिकारे पुनर्न्यगग्रहणं चार्थम् । अधिकेशी। अधिकेशा । निःकेशी । निःकेशा माला। इह कस्मान्न भवति कल्याणं पाणिपादमस्याः कल्याणपाणिपादा । स्वाङ्गसमुदायः स्वाङ्गग्रहणेन न गृह्यते किम् स्वांग अद्रवं मूर्तिमत्स्वाङ्ग प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं चेत् तस्य चेत् तत् तथायुतम् । स्वाङ्ग मुखादि । अद्रवमिति किम् । बहुकफा । मूर्तिमदिति किम् । बहुज्ञाना । प्राणिस्थमिति किम् । ऋक्ष्णमुखा शाला । अविकारजमिति किम् । बहुसोफा । अतस्थं तत्र दृष्टं च प्राक् प्राणिनि दृष्टं संप्रत्यप्राणिस्थमपि स्वाङ्गम् । दीर्घकेशी । दीर्घकेशा रथ्या । तस्य चेत्तत् तथा युतम् येन प्रकारेण प्राणिनो युतदृष्टं तस्या प्राणिनोपि यदि तत्तथायुतं दृश्यते एवमपि स्वाङ्गम् । दीर्घमुखा दीर्घमुखी अर्चा ॥

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गात् ॥ ४८ ॥

स्वाङ्गान्नीच इति वर्तते । वेति च । नासिकादयो ये नीचः तदन्तान्मृदः वा ङीत्यो भवति । दीर्घनासिकी । दीर्घनासिका । तनूदरी । तनूदरा । बिम्बोष्ठी । बिम्बोष्ठा । ओत्वोष्ठयोर्वासे पररूपमुपसंख्यास्यते । समजङ्घी । समजङ्घा । समदन्ती । समदन्ता । चारुकर्णी । चारुकर्णा । तीक्ष्णशृङ्गी । तीक्ष्णशृङ्गा । नासिकोदरयोर्बह्वच इत्यनन्तरे प्रतिषेधे प्राप्ते ग्रहणम् । सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येव शेषाणामस्फोङइति पूर्वस्मिन् प्रतिषेधे प्राप्ते उपादानम् । महादिप्रतिषेधस्तु भवत्येव। पुच्छाच्चेति वक्तव्यम् दीर्घपुच्छी । दीर्घपुच्छा।कबरमणिशरविषेभ्यो नित्यमिति वक्तव्यम् । कबरं पुच्छमस्याः कबरपुच्छी । मणिः पुच्छे

अस्याः मणिपुच्छी । विषं पुच्छे अस्याः विषपुच्छी । ईषिश्रे-षणो वेत्यत्र खड्गादिभ्यः इवतस्य परवचनमुक्तम् । उपमानात् पक्षपुच्छाभ्यामिति वक्तव्यम् । उलूक इव पक्षावस्याः उलूक-पक्षी शाला । उलूक इव पुच्छमस्या उलूकपुच्छी सेना ॥

न क्रोडादिबह्वचः ॥ ४९ ॥

क्रोडादिर्गणः । क्रोडाद्यन्तात् बह्वजन्ताच्च मृदः ङीत्यो न भवति । स्वाङ्गान्नीच इति प्राप्तिः । क्रोडाशब्दः स्त्रीलिङ्गः । कल्याणी क्रोडा अस्याः कल्याणक्रोडा । कल्याणगोरवा । कल्याणबाला । कल्याणखुरा । कल्याणशफा । कल्याणगुदा क्रोडादिराकृतिगणः । सुभगा । सुगला । बह्वचःखल्वपि । पृथुजघना । दृढहृदया । महाललाटा ॥

सहनञ्विद्यमानात् ॥ ॥ ५० ॥

सह नञ् विद्यमान इत्येतेभ्य उत्तरं यत्स्वाङ्गं तद-न्तात् ङीत्यो भवति । सकेशा । अकेशा । विद्यमानकेशा । सनासिका । अनासिका । विद्यमाननासिका । सुदन्ता । विद्यमानदन्ता ॥

नखमुखात्खौ ॥ ५१ ॥

नख मुख इत्येवमन्तान्मृदः खुविषये ङीत्यो न भवति । सूर्पणखा । व्याघ्रणखा । वज्रणखा । पूर्वपदात्खावग इति णत्वम् । गौरमुखा । श्लक्ष्णमुखा । संज्ञाशब्दा एते । खाविति किम् । सूर्पमिव नखा अस्या सूर्पनखी । सूर्पनखा । चन्द्रमुखी । चन्द्रमुखा ॥

सख्यशिश्वी ॥ ५२ ॥

सखी अशिश्वी इत्येतौ शब्दौ निपात्येते ङीविधिर्नि-पात्यते । सखीयं कुमारी । नास्याः शिशुरस्ति अशिश्वी ॥

जातेरयोङः ॥ ५३ ॥

अत इति वर्तते । जातिवाचिन अयकारोङो मृदः स्त्रियां ङीत्यो भवति । आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह । आकृतिः संस्थानं आकृतिर्ग्रहणमस्याः आकृतिग्रहणा । ब्राह्मणत्वादीनां जातिविशेषाणां संस्थानविशेषाभावात् कथं संग्रहः । लिङ्गानां च न सर्वभाक् एकलिंगो द्विलिङ्गो वा भावो जातिः। ब्राह्मणत्वादिषु केवलमुपदेशमात्रं जातिव्यवहारस्य निबंधनम्। जात्यभावेऽपि द्विलिंगतास्ति देवदत्तः देवदत्ता इति । अथ कथं त्रिलिङ्गेषु तटस्तटी तटमित्येवमादिषु जातिवाचित्वम्। सकृदाख्यातनिर्ग्राह्या अभिधानप्रत्यययोरनाकस्मिकत्वात्तन्निमित्तं जातिरिति। एवं सकृदाख्याता निश्चयेन ग्राह्या ननु सर्वे शब्दा जातिवाचिन इत्यस्मिन् दर्शने यदृच्छाशब्दानां क्रियागुणशब्दानां च जातिशब्दत्वं देवदत्तादयोपि संज्ञाशब्दा बाल्यकौमारयौवनादिव्यवयविनीमाकृतिमवलम्बन्ते। एवं च देवदत्ता कारणा।शुक्लेत्यत्र ङीविधिः प्रसज्येत यदीदं दर्शनमाश्रीयेत व्यावर्त्यं नास्तीति ग्रहणमनर्थकं स्यात् । तस्माद्येषां जातिरेव प्रवृत्तिनिमित्तं त इह जातिशब्दाः । गोत्रं च लौकिकमपत्यमात्रं जातिः मात्राकृतिः प्रतीयते नापि किंचिल्लिङ्गमस्ति येन सकृदाख्यातेन लिङ्गानां च न सर्वभागित्यस्मिन् दर्शने गोत्रंचेति न वक्तव्यम् चरणैः सहेति चरणमध्ययनवशात् क्रिया तदात्मकं जातिः । कुक्कुटी । ब्राह्मणी । तटी । नाडायनी । बह्वृची । कठी । कठेन प्रोक्तमधीते या शौनकादिभ्यश्छन्दसि णिनिति णिन् । परस्याणः उपप्रोक्तादित्युप् । सौनकादिष्वेव । कठचरकादिति इन उप् । जातेरिति किम् । मुण्डा । अयोङ इति किम् । आर्या । क्षत्रिया ।

पाककर्णपर्णपुष्पफलमूलवालद्युः ॥ ५४ ॥

पाकादयो द्युभूता यस्य तस्माज्जातिवाचिनो मृदः स्त्रियां ङीत्यो भवति । ओदनपाकी । शङ्खपाकी । मूषिककर्णी । संकुकर्णी । यष्टीपर्णी । शालिपर्णी । शङ्खपुष्पी । हिरण्यपुष्पी । दासीफली ; पूगफली । दर्भमूली । सीर्यमूली । गोवाली । अश्ववाली । पुष्पफलमूलोत्तरपदादुतो ङीविधिर्नेष्यते तद्-जादिषु पठनीयम् । पूर्वेण सिद्धे नियमार्थमेतत् स्त्रियामेव ये जातिवाचिनः शब्दाः तेषु एतेभ्य एव ङीविधिर्नान्यस्मात् । बलाका । मक्षिका ।

इतो मनुष्यजातेः ॥ ५५ ॥

इकारान्तान्मनुष्यजातिवाचिनो मृदः स्त्रियां ङीत्यो भवति । कुन्ती । अवन्ती । अपत्यार्थे द्विकुरुनाद्यजादकौशलात्-ज्य इति ज्यः । तस्य कुन्त्यवन्तिकुरुभ्यः स्त्रियामित्युप् । एवं दाक्षी । प्लाक्षी । इत इति किम् । विट् । दरत् । यथासंख्यमञणोः अतोऽप्राच्यभर्गादेरित्युप् । मनुष्यग्रहणं किम् । तित्तिरिः । जाते-रिति वर्तमाने पुनर्जातिग्रहणं योङोऽपि यथा स्यात् । औदमेयी । अयोङ इति प्रतिषेधः उत्तरत्र त्रिसूत्र्यां च वर्तते । इञ उपसंख्यानमजात्यर्थं कर्तव्यम् । सुतङ्गमेन निर्वृत्ता नगरी सौतङ्गमी । बुञ्छण्कठेत्यादिना सुतङ्गमादिभ्य इञ् ।

ऊङुतः ॥ ५६ ॥

मनुष्यजातेरिति वर्तते । उकारान्तान्मनुष्यजातिवाचिनो मृदः स्त्रियां ऊकारस्त्यो भवति । कुरूः । इक्ष्वाकूः । पर्शूः । अस्य कुन्त्यवन्तिकुरुभ्यःस्त्रियामिति अञणोः अ-तोऽप्राच्यभर्गादेरित्युप् । द्विमात्रोच्चारणं शेषाद्वेति परस्यापि कपो बाधनार्थम् । तथाहि ब्रह्म बन्धुर्यस्याः सा ब्रह्मबन्धूः ।

वीरबन्धूः । अत्र च समुदायो ब्राह्मणविशेषजातिः । यदृभ्दावेन मृदस्मृदोरैकादेशः मृद्भ्रुवतीति मृतसंज्ञायां स्वाद्युत्पत्तिः । मनुष्यजातेरित्येव । रुरुः । कृकवाकुः । आखुः । अयोङ इत्येव । अध्वर्युः स्त्री । अलाबूः । कर्कन्धूरित्येवमादयः ऊणादिकाःकथं अलाबुकर्कंधुदत्रूफलमिति इकः प्रोद्या इति प्रादेशेन सिद्धम् ।

पङ्गोः ॥ ५७ ॥

पङ्गुशब्दात् स्त्रियां ऊत्यो भवति । पङ्गूः । श्वसुरशब्दस्योकाराकरयोः खमूश्च त्यो वक्तव्यः । श्वश्रूः ॥

ऊरुद्योरिवे ॥ ५८ ॥

ऊरुशब्दो द्युर्यस्य तस्मान्मृदः इवार्थे गम्ये स्त्रियामूत्यो भवति । करभोरूः । कदलीस्तम्भोरूः । नागनासोरूः । इव इति किम् । वृत्तोरुः कन्या ।

संहितसफलक्षणवामादेः ॥ ५९ ॥

संहिताद्यादेर्मृदः ऊरुद्योः स्त्रियामूत्यो भवति । अनिवार्थोऽयमारम्भः । संहितोरूः । सफोरूः । लक्षणोरूः । वामोरूः । सहित सहाभ्यां चेति वक्तव्यम् । सहितोरूः । सहोरूः ।

बाह्वन्तकद्रुकमण्डलुभ्यः ॥ ६० ॥

बाहुशब्दान्तान्मृदः कद्रुकमण्डलुशब्दाभ्यां खुविषये ऊत्यो भवति । मद्रबाहूः । भद्रबाहूः । कद्रूः । कमंडलूः । कासांचिदेताः संज्ञाः । खाविति किम् । वृत्तौ बाहू अस्याः वृतबाहूः । कद्रुः । कमण्डलुः ॥

हृतः ॥ ६१ ॥

अधिकारेणेयं संज्ञा । यानित ऊर्ध्वमनुक्रमिष्यामः आकपः हृत्संज्ञास्ते वेदितव्याः । वश्यति । युनस्तिः युवतिः ।

कृद्धृतगइति मृत्संज्ञाया स्त्वाद्युत्पत्तिः । बहुत्वनिर्देशोऽनुक्तपरिग्रहार्थः । मध्यान्म उक्तो ऽन्यतोऽपि भवति । अन्तमः । आदिमः । धर्माट्ठण् विहितः । अधर्मादपि । आधर्मिकः । कृतामिह बहुत्वेन निर्देशे किं प्रयोजनम् । अनुक्तास्त्र कृदुत्पत्तिर्यथा स्यादन्तमादिषु । तथा अनुक्ता अपि कृते भवन्ति । अग्रपश्चाड्डिम इत्येवमादयः ॥

यूनस्तिः ॥ ६२ ॥

युवन्नित्येतस्मात्तिर्भवति स्त्रियाम् । युवतिः । यूनः स्त्रीविवक्षायां कुत्साद्यर्थविवक्षायां च परत्वात् कादयः प्राप्नुवन्ति तस्माद्यून इति योगविभागः । यूनः कृत्प्रसङ्गे स्त्रीत्य एव भवति ततः कादयः । युवतिकाः ।

ष्योऽस्रु रूपान्त्ययोर्वृद्धेऽनार्षेऽणिञोः ॥ ६३ ॥

स्त्रियामिति वर्तते । अणिञौ यौ वृद्धेऽनार्षे विहितौ अस्रुरूपान्त्यौ तदन्तस्य मृदः ष्य इत्ययमादेशो भवति । निर्दिश्यमानयोरणिञोरेव ष्यादेशः । पौत्रादि वृद्धमिति अपत्यविशेषस्य वृद्धसंज्ञा । ऋषेरिदमार्षं तद्रहिते वृद्ध इति । स्फे रुः दीरिति अचां रु संज्ञोक्ता रुः उपान्त्यं सन्निहितं ययोरणिञोस्तयो ष्यादेशः । षकारः षे ष्यस्य पुत्रपत्योर्ञिरित्यत्र विशेषणार्थः । करीषस्येव गन्धोऽस्य करीषगन्धिः । उपमानादिति वा इकारः सान्तः । करीषगन्धेरपत्यं स्त्री कारीषगन्ध्या । कौमुदगन्ध्या । वराहस्यापत्यं स्त्री वाराह्या । बालाक्या । जातिलक्षणस्यायोङ् इति प्रतिषेधः अनल्विधाविति स्थानिवद्भावप्रतिषेधात् । अणिञ्लक्षणोऽपि ङीत्यो न भवति ततः ष्यान्ताट्टाप् । अचिति इत्यामविवक्षार्थं अचां निर्द्धारणं क्रियते अस्रुरूपान्त्ययोरिति अन्यथा येननाव्यवधानं तेन व्यवहितेऽपीति एकेन वर्णेन व्यवधाने

वाराह्यादिषु स्यात् । अञिति बहुत्वनिर्देशः प्रधानभूतो-यत्राचां बहुत्वमस्ति तत्रादेशः तेनेह न भवति । दाक्षी । प्लाक्षी रूपांत्ययोरिति किम् । औपगवी । वृद्ध इति किम् । अहि-च्छत्रे जाता आहिच्छत्री । अनार्ष इति किम् । वाशिष्ठी । वैश्वामित्री । अणिञोरिति किम् । आर्तभागी । ऋतभा-गाद्विदादिलक्षणोऽञ् । इह उडुलोम्नोऽपत्यं स्त्री औडुलोम्या । बाह्वादित्वादिञ् टिखे कृते रूपान्त्यत्वं ततः ष्यादेश इति आनुपूर्व्यम् ॥

गोत्रावयवात् ॥ ६४ ॥

अणिञोरिति वर्तते । गोत्रमिति पूर्वाचार्याणां वृद्धस्य संज्ञा । गोत्रावयवाः गोत्राभिमताः कुलाख्याः गोत्रावयववा-चिनो मृदः वृद्धे विहितयोरणिञोः स्त्रियां ष्यो भवति । अरूपां-त्यार्थोऽयमारम्भः । पुणिकस्यापत्यं स्त्री पौणिक्या । भुणिकस्य भौणिक्या । मुखरस्य मौखर्या । यत्रानन्तरापत्येऽपि ष्यो दृश्य-ते क्रौड्यादिषु तत्पठनीयं यथा आन्तकाम्या देवदत्ता ॥

क्रौड्यादेः ॥ ६५ ॥

क्रौड्य इत्येवमादिभ्यश्च स्त्रियां ष्यो भवति यथासम्भ-वङीटापोः प्राप्तयोः क्वचिदनन्तरापत्यार्थः क्वचिद्बह्वजर्थः क्वचि-दरूपान्त्यार्थः आरम्भः क्वचिदणिञोरनयोरपि त्यएवायं ष्य इष्यते । क्रौडी । क्रौड्या । इतोमनुष्यजातेरिति ङीविधिः प्राप्तः । क्रौडि लाडि व्याडि आपिशलि आपक्षिति एते इञन्ताः । चौपयत चैटयत सैकयत बैल्वयत एते नकारान्ता अणन्ताः । सौधातकिः इञन्तः । सूतशब्दाद्युवत्या ष्यः । सूत्या । सूता अन्यत्र । भोजात् क्षत्रियजातौ । भोज्या । भोजा अन्या । भौरिकिसालास्थलिकापिष्टलि एते इञन्ताः । गौकक्षा टाबन्तोऽञारम्भं ञित्यनिवृत्त्यर्थम् । गौकक्ष्यापुत्रः ॥

दैवयज्ञिसौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो वा ॥ ६६ ॥

दैवयज्ञि सौचवृक्षि सात्यमुग्रि काण्ठेविद्धि इत्येतेभ्यः वा ष्यो भवति । उभयत्र विभाषेयम् । वृद्धे प्राप्ते अनन्तरापत्ये चाप्राप्ते । दैवयज्ञ्या । दैवयज्ञी । सौचिवृक्ष्या । सौचिवृक्षी । सात्यमुग्र्या । सात्यमुग्री । काण्ठेविध्या । काण्ठेविद्धी । अनन्तरापत्ये इञ उपसंख्यानमजात्यर्थमिति ङी वृद्धापत्ये इतोमनुष्यजातेरिति ॥

समर्थात्प्रथमाद्वा ॥ ६७ ॥

समर्थादिति प्रथमादिति वेति च पदत्रितयमधिकृतं वेदितव्यम् किंबहुसर्वनाम्नोद्व्यादेरित्यतः प्राक् वक्ष्यति तस्यापत्यं उपगोरपत्यं औपगवः । तस्येत्येतत्तावत् सूत्रे प्रथमं सन्निविष्टम् तस्मादपत्याभिधाने त्यः समर्थादित्युच्यते सामर्थ्यं च सुबन्तस्येति सुबन्तात्त्योत्पत्तिः द्वद्ववर्णादिति विशेषणार्थं तु ङ्याम्मृद्ग्रहणमधिक्रियते वृद्धस्य उपगोरपत्यमिति वाक्यस्यासुबन्तत्वात् वाक्यावयवस्य चासामर्थ्यात् त्यानुत्पत्तिः । समर्थादिति किम् । कम्बल उपगोरपत्यं देवदत्तस्य । यद्येवं समर्थः पदविधिरिति समर्थादेव भविष्यति किमनेन कृतवर्णानुपूर्वकात् पदात् त्यो यथा स्यादित्येवमर्थम् । सूत्थितस्यापत्यं सौत्थितिः । वैकमाणिरिति नेन्द्रस्येत्यत्र वक्ष्यति समुदायकार्यं तावद्भवति पश्चादेकादेशः । एवं वासंहितात्त्योत्पत्तावनिष्टं रूपं स्यात् । प्रथमादिति किम् । तान्ताद्यथा स्यादपत्यशब्दान्मा भूत । वाग्रहणं किम् । उपगोरपत्यमिति वाक्यमपि साधु यथा स्यात् । अनन्तराद्वाग्रहणात् सविधिरपि । उपग्वपत्यम् ॥

प्राग्द्रोरण् ॥ ६८ ॥

द्रोः माने वय इति वक्ष्यति प्रागेतस्माद्योऽर्था वक्ष्यन्ते तेष्वण् भवतीति वेदितव्यम् । अधिकारो विधिर्वाऽयम् । अधिकारपक्षे पीलाया वा वोदश्वित इत्येवमादौ वावचनादपवादविषये नास्ति वृत्तिः । विधिपक्षेपि परिहृत्यापवादविषयं तत उत्सर्गोऽभिनिविशते । वक्ष्यति तस्यापत्यं औपगवः । कापटवः । अपवादेन बाधितोऽप्युत्तरत्रानुवर्ततामिति प्राग्वचनम् ।

अश्वपत्यादेः ॥ ६९ ॥

अश्वपति इत्येवमादिभ्यः समर्थविभक्त्यन्तेभ्यः अण् भवति प्राग् द्रोरर्थेषु । पतिद्योरिति रायो वक्ष्यते । तस्यायमपवादः । अश्वपतेरपत्यं आश्वपतः । अश्वपति गणपति गणपति राष्ट्रपति कुलपति पशुपति धान्यपति बन्धुपति सभापति क्षेत्रपति येऽत्र द्रुसंज्ञाः तेभ्यः दोश्छ इति छ बाधित्वा पूर्वनिर्णयेनायमेवाण् ।

दित्यदित्यादित्यपतिद्योर्ण्यः ॥ ७० ॥

प्राग् द्रोरिति वर्तते । दिति अदिति आदित्य पतिद्यु इत्येतेभ्यः समर्थविभत्यंतेभ्यः प्राग् द्रोरर्थेषु र्ण्यो भवति । अणोऽपवादः । दितेरपत्यं दैत्यः । द्व्यचइतोनिञ्इतीमंढणं पूर्वनिर्णयेनायं बाधते । सर्वतोत्यार्थोदिति ङीविधौ कृते परत्वाड्ढण् च भवति । दैतेयः । लिंगविशिष्टपरिभाषावानित्या अदितेरपत्यं आदित्यः । आदित्यस्यापत्यमादित्यः । प्राकृतस्य यकारस्य कप्यान्नात्र ह्यापत्यस्येति हलो यमां यमि खमिति वा खम् । पतिद्योः खल्वपि । बार्हस्पत्यः । सैनापत्यः । प्राजापत्यः । रायादयोऽर्थविशेषलक्षणादणपवादात् पूर्वनिर्णयेन राय

एव भवति । वनस्पतीनां समूहः वानस्पत्यम् । यमाच्चेति वक्तव्यम् । यमस्यापत्यं याम्यः । पृथिव्या जाञौ । पार्थिवः । पार्थिवी । देवस्य यञञौ । दैव्यम् । दैवम् । बहिषष्टिखं यञ्च । बाह्यम् । ईक एव । बाहीकः । ऋमेमार्त्र्टिखमनित्यमारातीय इत्यादौ । स्थाम्नोऽकारः । अश्वत्थाम्नोऽपत्यं अश्वत्थामः । लोम्नश्चापत्येषु बहुषु । उडुलोमाः । शरलोमाः । बहुष्विति किम् । औडुलोमिः । शारलोमिः । सर्वत्र गोरजादिप्रसंगे यः । गव्यः । अजादिप्रसंग इति किम् । गोरूप्यम् । गोमयम् ॥

उत्सादेरञ् ॥ ७१ ॥

प्राग्द्रोरिति वर्तते । उत्स इत्येवमादिभ्यः समर्थविभक्त्यन्तेभ्यः प्राग्द्रोरर्थेष्वञ् भवति । अणस्तदपवादानां च बाधकः । अञि सति यञञोरिति बहुत्वे उब्भवति । उत्सस्यापत्यं औत्सः । उदपानस्यापत्यमौदपानः । उत्स उदपान विकिर विनद महानद महाप्राण तरुण तलुन वष्कयशब्दाद्से असमास इत्यर्थः । धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर पीलुकुण उदस्थानशब्दाद्देशे पृषदंश भल्लकीय रथंतर मध्यंदिन बृहत् महत् सत्वत्शब्दो मत्वंतः आगतनुको गृह्यते । कुरु पञ्चाल इंद्रावसान उष्णिह ककुभ् सुपर्ण ग्रीष्मादछन्दसीति वक्तव्यम् । छन्दश्चेह वृत्तजातिः । तरुणशब्दस्य लिंगविशिष्टस्य ग्रहणम् । तरुण्या अपत्यं तारुणः रायाद्योऽर्थविशेषलक्षणादणपवादात् पूर्वनिर्णयेन भवन्तीति ।

स्त्रीपुंसान्नुक्त्वात् ॥ ७२ ॥

वक्ष्यति भ्रस्नणस्त्व एतस्मात्त्वसंशब्दनात् प्राग्योऽर्थो वक्ष्यते तेषु स्त्रीशब्दात् पुंशब्दाच्च अञ् भवति नुगागमः । स्त्रीषु भवं स्त्रीणां समूहः स्त्रीभ्यः आगतम् स्त्रीभ्यो हितं

स्त्रीणां भावो वा स्त्रैणम् । एवं पौंस्नम् । नोपुंसोहृतीत्तिप्रतिषेधात् पुंसष्ट्विखं न भवति । स्त्रीशब्दस्य तु नुग्वचनं सामर्थ्यात् । स्त्रैणाः पौंस्ना इत्यत्र यञञोरित्युप् प्राप्नोति इह च स्त्रैणानां संघ इति संघाङ्कलक्षणाइत्यण् प्राप्नोति । चेत्नैतौ दोषौ अपत्याधिकारात् प्रागूर्द्धं च वृद्धग्रहणेषु लौकिकगोत्रग्रहणमितिवक्ष्यते नच स्त्रैणं पौंस्नमिति वा लौकिकं गोत्रं तस्मादुपरगौ न भवतः । पुंवद्भावातीयदेशीय इतिवचनं योगापेक्षं ज्ञापकं वतोऽर्थे नायं विधिरिति । स्त्रीवत् । पुंवत् ।

वृद्धेऽच्यनुप् ॥ ७३ ॥

प्राग्द्रोरिति वर्तते । यस्कादिभ्यो वृद्ध इत्यत्र उप्युक्तः तस्यानुम्भवति प्राग्द्रवीय अजादावुत्पत्स्यमाने । गर्गाणां छात्राः गार्गीयाः । यञञोरिति बहुत्वे उप् प्राप्तः छैयविषये प्रतिषिध्यते । यस्य ङ्यांचेत्यरवं क्यद्गुतावृत्यापत्यस्येति यखम् त्याश्रयलक्षण ऐरुभवति । यास्कीयाः । शिवादिलक्षणस्याणः यस्कादिभ्यो वृद्ध इत्युप् प्राप्तः । आत्रेयीयाः । द्व्यचः इतोनिञ इतिढणस्य भृग्वत्रिकुत्सवशिष्टगोतमांगिरोभ्यश्चेत्युप्प्राप्तः । खारपायणीयाः । यस्कादिभ्यो वृद्ध इत्यनेन नडादिफणः उप् प्राप्तः । वृद्ध इति किम् । कुबलस्येदं कौवलम् । वादरम् । अवयवार्थे आगतस्याणः उप्फल इति उबेव भवति । अचीति किम् । गर्गेभ्यः गर्गरूप्यम् । गर्गमयम् । प्राग्द्रोरित्येव गर्गेभ्यो हितं गर्गीयम् । वृद्धाद्वहुन्तात् एकस्मिन् यूनि द्वयोर्वा यूनोर्यस्य: तस्मिन्नष्टेऽप्यनुरुभवति । विदानामपत्यं युवा बैदः वैदा । अञन्तादत इञ् । तस्य ञिगयराजार्षाद्युन्युवणिञोरित्युप् । त्यखे त्याश्रयमित्यजादित्वमस्ति । वर्णाश्रये नास्ति त्याश्रयमिति न मंतव्यम् । अचीति विषयनिर्देशः । एकद्व्यन्ताच्च वृद्धात् युवबहुत्वविवक्षायां उब्न वक्तव्यः । वैदस्य वैदयोः अपत्यानि युवानः बिदाः ।

रस्योऽनपत्ये ॥ ७४ ॥

प्राग्द्रोरिति वर्तते। रस्य निमित्तत्वेन संबन्धी यो हृत् अपत्यवर्जिते प्राग्द्रोरर्थे विहितः तस्योऽभवति। पंचसु गुरुषु भवः पञ्चगुरुर्नमस्कारः। दशसु धर्म्मेषु भवः दशधर्मः। द्वावनुयोगावधीते द्व्यनुयोगः। त्र्यनुयोगः। द्व्यर्थे पसः। संख्यादीरसंज्ञः। भवार्थे आगतस्याणः उप्। रस्येति निमित्तविशेषणं किम्। रबन्ताद्यो हृत् तस्योब्मा भूत्। पंचगुरोर्नमस्कारस्येदं पांचगुरवम्। यदि रस्य निमित्तं यो हृत् तस्योप् इह तर्हि न प्राप्नोति पंचानां कपालानां समाहारः पंचकपाली। पंचकपाल्यां संस्कृतः पंचकपालः। नैष दोषः। अठयविकन्यायेन पंचकपालशब्दात् त्योत्पत्तिः। यथा अवेर्मांसं आविकमिति अविकशब्दादेव त्यो नाविशब्दात्। अनपत्य इति किम्। द्वयोर्देवदत्तयोरपत्यं द्वैदेवदत्तिः। अज्ग्रहणमनुवर्तते तेनेह न भवति। पंचभ्यो गर्गेभ्य आगतं पंचगर्गमयम्। प्राग्द्रोरित्येव। द्वाभ्यामक्षाभ्यां दीव्यति द्वैयक्षिकः। त्रैयक्षिकः।

यूनि ॥ ७५ ॥

प्राग्द्रोरिति वर्तते। अचीति च यूनि यस्त्यस्तस्योप् भवति प्राग्द्रवीय अजादौ त्य उत्पत्स्यमाने। फांटाहृतिः। तस्यापत्यं युवा फांटाहृतेर्ण इति णः फांटाहृतः। तस्य यूनश्छात्रा बुद्धिस्यएवानपत्ये अजादौ त्ये णस्योपि कृते इञन्तमिदं जातम्। इञ इत्यण् भवति। फांटाहृताः। भगवित्तस्यापत्यं भागवित्तिः। तस्यापत्यं युवा दोष्ठण् सौवीरेषु प्राय इति ठण्। भागवित्तिकः। तस्य यूनश्छात्राः ठण उपि कृते इञइत्यण् भागवित्ताः। तिकस्यापत्यं तैकायनिः। तस्यापत्यं युवा फेश्छः इति छः तैकायनीयः। तस्य यूनश्छात्राः छस्योपि कृते दोश्छ इति छः तैकायनीयाः। ग्लुचु-

कस्यापत्यं फिरदोरिति फिः ग्लुचुकायनिः । तस्यापत्यं युवा प्राग्द्रोरण् ग्लौचुकायनः तस्य यूनश्छात्रा अणपि तस्येदमित्यण् ग्लौचुकायनाः । कपिञ्जलादस्यापत्यं कापिंजलादिः तस्यापत्यं युवा कुञ्जादेर्ण्य इतिण्यः । कापिञ्जलाद्यः तस्य यूनश्छात्रा ण्यस्योपि कृते इञ इत्य कापिंजलादाः । अचीत्येव । फांटाहृतरूप्यम् । फांटाहृतमयम् । प्राग्द्रोरित्येव । भागवित्तिकाय हितं भागवित्तिकीयम् ।

**फण्फिञोर्वा ॥ ७६ ॥**

यूनीति वर्तते । यूनि यौ फणफिञौ तयोर्वा उब्भवति प्राग्द्रवीये अजादौ त्ये विवक्षिते । पूर्वेण नित्ये उपि प्राप्ते विभाषेयम् । गार्ग्यस्यापत्यं युवा यञिञोरिति फण् गार्ग्यायणः । तस्य यूनश्छात्रा गार्गीया गार्ग्या वा । फिञः खल्वपि यस्कस्यापत्यं शिवादिभ्योऽण् यास्कः । यास्कस्यापत्यं युवा द्व्यचोऽत इति फिञ् यास्कायनिः तस्य यूनश्छात्राः यास्कीयाः । यास्कायनीयाः ।

**तस्यापत्यम् ॥ ७७ ॥**

तस्येति ताममर्थात् अपत्यमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति । हृदर्थनिर्देशलिंगवचनादिकमविवक्षितमप्राधान्यात् । उपगोरपत्यं औपगवः । तान्तादण् उक्तार्थस्यापत्यशब्दस्य निवृत्तिः सुपोधुमृदोरिति सुप उप् ऐप् आश्वपतः दैत्यः । सैनापत्यः औत्सः । स्त्रैणः । पौस्नः वृत्तौ स्वभावेन एकार्थीभावः प्रकृत्यर्थो विशेषणभूतोऽप्राधानं त्यार्थस्य सामान्येन प्रवृत्तस्य विशेषेवस्थापनात्त्यार्थः प्रधानम् । गुणप्रधानभावेन प्रकृतिस्त्यश्च त्यार्थं सह ब्रूत इति । ननु च तस्येदं विशेषणं एते अपत्यं समूहो निवासो विकार इति

तस्येदमित्येव सिद्धं किमर्थमिदमुच्यते बाधकबाधनार्थम् । भानोरपत्यं भानवः। श्यामगवः। दुलक्षणश्छो बाधितः। तस्याऽपत्यमद्वाह्वादेरिञित्येव वक्तव्ये इह करणं पूर्वैरुत्तरैश्च त्यैरभिसंबन्धो यथा स्यादित्येवमर्थम् ॥

पौत्रादि वृद्धम् ॥ ७८ ॥

पुत्रस्यापत्यं पौत्रः बिदादित्वादञ् प्रथमादिति वर्तमान अर्थवशात्तया विपरिणम्यते प्रथमस्य पौत्रादि यदपत्यं तत् वृद्धसंज्ञं भवति संज्ञाविषयस्य प्रथमस्य गर्गस्यापत्यं गार्ग्यः। वात्स्यः । वृद्धकुञ्जादिभ्योञ्फ इति वर्तमाने गर्गादेर्यञिति यञ् । पौत्रादीति किम् । गार्गिः। अनन्तरमपत्यं वृद्धं मा भूत् ।

एकः ॥ ७९ ॥

वृद्धमिति वर्तते। वृद्धे अपत्ये विवक्षिते एक एव त्यो भवति। स्वस्याः स्वस्याः प्रकृतेः अपत्यभेदविवक्षायां अनेकं त्यं बुध्वा समुदायीकृत्य नियमः क्रियते यदिदं गर्गादिपितृकं अपत्यजातं वृद्धं तस्मिन्नेक एव त्यो भवति। स च परमप्रकृतेर्भवति यदपि व्यवहितेन जनितमपत्यं तदपि परमप्रकृतेः सामान्येनापत्यं भवत्येव । यद्यपि सर्वेऽप्यपत्येन युज्यन्ते तथापि प्रथमादित्यनुवर्तनात् परमप्रकृतेरेव भविष्यति गर्गस्यापत्यं गार्ग्यः । तत्सुतोपि गार्ग्यः । एवं व्यवहितेऽपि वृद्धापत्ये विवक्षिते गर्गशब्दात् यञेव भवति। अथवा प्रकृतिनियमोऽयं वृद्धापत्ये विवक्षिते एक एव शब्दः प्रथमा प्रकृतिः त्यमुत्पादयति नान्येति प्रकृतिर्नियम्यते । एवं नडस्यापत्यं नाडायनः ।

ततो यूनि ॥ ८० ॥

ततो वृद्धत्यान्ताद् यून्यपत्ये विवक्षिते एक एव त्यो

भवति। गार्ग्यस्यापत्यं युवा गार्ग्यायणः । दाक्षायणः । औपगविः । माहायनिः ।

जीवति तु वंश्ये युवा ऽस्त्री ॥ ८१ ॥

वंशः पितृपितामहादिप्रबन्धः तत्र भवो वंश्यः पित्रादिः । पौत्रादीति वर्तते । तच्चार्थवशात् तांत संबंध्यते । पौत्रादेर्यदपत्यं चतुर्थादिकं तद्वंशे जीवति युवसंज्ञं भवति स्त्रियं वर्जयित्वा । गार्ग्यस्यापत्यं गार्ग्यायणः । दाक्षेर्दाक्षायणः । अस्त्रियामिति किम् । गार्ग्यस्यापत्यं स्त्री गार्गी दाक्षी । तु शब्दो वृद्धसंज्ञासमावेशनिवृत्त्यर्थम् इह दोषः स्यात् शालङ्केरपत्यं युवा यञिञोरिति फण् । पैलस्यापत्यं युवा द्व्यचोऽण इति फिञ् तयोर्यूनि पैलादेरित्युप् भवति । वृद्धसंज्ञासमावेशे तु वृद्धेष्यनुबिति प्राग्दीव्यते अजादावनुप् प्रसज्येत । अस्तु यूनीति भविष्यति इह तर्हि दोषः फण्फिञोर्वेति विकल्पं वक्ष्यते उपपक्षेऽपि वृद्धसंज्ञासमावेशे वृद्धे ऽनुबिति अनुप्स्यात् । अथासमावेशे कथं वृद्धलक्षणो वुञ् गार्ग्यायणानां समूहः गार्गायणकं वक्ष्यति वृद्धोक्षोष्ट्रादिसूत्रे वृद्धग्रहणेनैव सिद्धे राजन्यमनुष्यग्रहणं ज्ञापकमपत्याधिकारादन्यत्र वृद्धग्रहणे लौकिकं गोत्रग्रहणम् । तेन वृद्धयूनोः समावेशः ।

भ्रातरि च ज्यायसि ॥ ८२ ॥

पौत्रादेरपत्यमिति वर्तते भ्रातरि च ज्यायसि जीवति कनीयान् भ्राता युवसंज्ञो भवति । मृतेऽपि वंश्ये यथा स्यादित्यारंभः भ्राता वंश्यो न भवति साक्षात् परम्परया वा अकारणत्वात् गार्ग्यस्य द्वौ पुत्रौ ज्यायसि जीवति कनीयान् गार्ग्यायणः । एवं दाक्षायणः ज्यायांस्तु भ्राता गार्ग्यो दाक्षिरिति ।

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ ८३ ॥

पौत्रादेरपत्यमिति वर्तते येषां सप्तमः पुरुष एकस्ते सपिण्डाः परस्परं वसे यसे वा सपिंडशब्दः समानस्य सभावः इहैव निपातितः । प्रकृतं जीवतीति शत्रन्तं स्थविरतरस्य विशेषणम् इदं तु जीवतीति पदं तिङन्तं संज्ञिनो विशेषणम् । भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रादेरपत्यं यज्जीवति तद्धा युवसंज्ञं भवति गार्ग्यायणो गार्ग्यः । दाक्षायणो दाक्षिः । अन्यग्रहणं किम् । भ्रातरि इति वर्तते । तस्मिन्नेव सपिंडे पितृव्यपुत्रे जीवति स्यात् । सपिंडग्रहणमसम्बन्धान्यसम्बन्धनिरासार्थम् । ज्यायसीति वर्तमाने स्थविरतरग्रहणं किम् । स्थानवयोभ्यां ज्येष्ठे सपिंडे यथा स्यात् भ्रातृव्ये वयोज्येष्ठे पितृव्यः कनीयान् युवसंज्ञो न भवति । जीवतीति किम् । मृते गार्ग्य एव ।

पूजाकुत्सयोर्व्यत्ययः ॥ ८४ ॥

वेति वर्तते । परस्परविषयगमनं व्यत्ययः । वृद्धस्य युवसंज्ञा यूनश्च वृद्धसंज्ञेत्यर्थः पूजायां कुत्सायां च गम्यमानायां यथासंख्यं वृद्धयूनोर्वा व्यत्ययो भवति पूजायाम् तत्र भवान् गार्ग्यायणः तत्र भवान् गार्ग्यो वा । युवसंज्ञासामर्थ्यात् वृद्धस्त्यं युवत्येन योगः । कुत्सायां गार्ग्य त्वं जाल्म गार्ग्यायणस्त्वं जाल्म । वृद्धसंज्ञासामर्थ्यात् युवत्यस्य निवृत्तिः ।

अद्वाह्वादेरिञ् ॥ ८५ ॥

तस्यापत्यमिति वर्तते । अकारान्तेभ्यो मृद्भ्यः बाहु इत्येवमादिभ्यश्च अनन्तरे वृद्धे युवसंज्ञके चाऽपत्ये इञ् भवत्यणोऽपवादः । आकम्पनिः । दाक्षिः । औपगविः । अनकारान्तार्थं बाधकबाधनार्थं च बाह्वादिग्रहणम् । बाहविः ।

औपबाकविः । बाहु उपबाकु निबाकु बराकु उपबिन्दु एभ्योऽण् प्राप्तः । बला द्वयच इति इण् प्राप्तः । वृकला बलाका मूषिका भगला लगला ध्रुवका सुमित्रा दुर्मित्रा एभ्यः स्त्रीभ्यो ढगिति ढक् । मानुषीलक्षणो वा ढण् स्यात् । पुष्करसत् अनुरहत् अनुशतिकादित्वादनयोः पदद्वयस्यैप् । देवशर्मन् इन्द्रशर्मन् कुनामन् पंचन् सप्तन् अमितौजसः सखं च सुधावत् उदंच् अज्चेर्निपातनात् नखाभावः शिरस् शिरो-मात्रस्यापत्यं नास्ति इति तदन्तविधिः हास्तिशीर्षिः । पैलुशीर्षिः । शिरसः शीर्षादेशो वक्ष्यते भाषमराविन् क्षेमवृत्वित् श्रृंखलतोदिन् खरनादिन् निपातनादणत्वम् नगर-मर्दिन् प्रकारमर्दिन् लोमन् लोम्नो तदन्तविधिः इत उत्तर प्रागुदंकशब्दात् कुर्वृष्यन्धकादिनाण् प्राप्तः । अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्बगद् प्रद्युम्न राम संकर्षण मध्यंदिन् सत्यक उदक संभूयोम्भसोः सखं च ठ्यान्ताख्यातयोः ख्याते संप्रत्यय इति तेन बाह्वादिप्रभृतिषु येषां लौकिकगोत्रभावं प्रति प्रवर्तनत्वमस्ति तेभ्य एव इञादयः । इह माभूत् बाहुर्नाम कश्चित् तस्यापत्यं बाहवः । आकृतिगणत्वादस्यांवान्धि; अजवेमविरिति ।

सुधातुरकङ् च ॥ ८६ ॥

सुधातृशब्दादिञ् भवति तत्सन्नियोगेन अकङादेशश्च । सुधातुरपत्यं सौधातकिः । व्यासवरुडनिषादचण्डालबिम्बादीनामिति वक्तव्यम् । न वक्तव्यम् । अव्यविकन्यायेन कान्तेभ्य एव त्यविधिः । वैयासकिः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः । कार्मारकिः ।

वृद्धे कुञ्जादिभ्यो ञ्फः ॥ ८७ ॥

वृद्धसंज्ञके अपत्ये विवक्षिते कुञ्ज इत्येवमादिभ्यः ञ्फो

भवति । इञोऽपवादः । आदौ जकारः व्रातञ्फादस्त्रियामिति विशेषणार्थः । कुञ्जस्यापत्यं पौत्रादि कौञ्जायन्यः । कौञ्जायन्यौ कौञ्जायनाः । व्रातञ्फादस्त्रियामिति स्वार्थे ञ्यो भवति द्विसंज्ञः कुञ्ज ब्रध्न शंख गण लोमन् लोमशब्देन तदन्तविधिरिति केचित् । भस्मन् शठ अयं गर्गादिष्वपि शाक शौण्ड शुभ विपाश् अयं शिवादिष्वपि स्कन्दभ । वृद्ध इति किम् । कुञ्जस्यापत्यमनन्तरं कौञ्जिः । वृद्ध इत्ययमधिकारश्च शिवादिभ्योऽणि त्यतः प्राक् ।

## नडादेः फण् ॥ ८८ ॥

नड इत्येवमादिभ्यो वृद्धेऽपत्ये फण् भवति । नडस्यापत्यं वृद्धं नाडायनः । वृद्ध इत्येव । अनन्तरो नाडिः । नड चर बक मुञ्ज इतिक इतिश उपक लमक सलंकु शलंकञ्चादेशं लभते सालङ्कायनः । कथं सालंकायनः कथं सालंकिः पिता सालंकिः पुत्रः सलंक इति प्रकृत्यन्तरमस्ति । अथवा पैलादिषु पाठसामर्थ्यात इञपि भवति पञ्चपूल वाजव्या तिक अग्निशर्मन् वृषगणे । गोत्रे आग्निशर्म्मायणो भवति वार्षगणश्चेत् आग्निशर्म्मिरन्यः प्राण नर सायक दास मित्र द्वीप तगर पिंगल किंकर कथन कतर कतल काश्य काव्य सैव्य अजावाच्य स्तम्भ शिंशपा अमुष्य निपातनात् साधुः । कृष्णरणौ ब्राह्मणवासिष्ठयोः । यथाक्रमं ब्राह्मणवाशिष्टेऽर्थे । अजमिश्र लिगु चित्र कुमार क्रोष्टुरपरस्त्वं क्रोष्टं च । लोह दुर्ग अग्र तृण शकट सुमत निमत ब्राह्मणचकणैरोपीष्यते चाटकैर बदर अश्वल अस्बर कामुक ब्रह्मदत्त उदम्बर अलोह दंड अन्ये इमानपि पठन्ति वक्ष्यमाणान् रुच् जत् इत्वत् जनत्वत् हिंसक दंडिन् हस्तिन् पञ्चाल चमसिन् । लौकिकगोत्रमात्र इत्येव नडो नाम कश्चित्तस्यापत्यं नाडिः ।

हरितादञः ॥ ८८ ॥

हरितादिर्बिदाद्यन्तर्गणः । हरितादिभ्यः अञन्तेभ्यः फण् भवति । इञोऽपवादः । इह वृद्धग्रहणमनुवर्तमानमञो विशेषणं वृद्धे यो ऽञ् विहितः तदन्तात् फण् एक इतिनियमाद्यूनि द्रष्टव्यः । हरितस्यापत्यं युवा हारितायनः । कैंदासायनः ।

यञिञोः ॥ ९० ॥

अत्रापि वृद्धग्रहणं यञिञोर्विशेषणं वृद्धे विहितौ यौ यञिञौ तदंतात्फण् भवति । सामर्थ्याद्यूनीति ज्ञातव्यम् । गार्ग्यायणः । दाक्षायणः । इह गार्ग्या अपत्यं गार्गेय इति लिंगविशिष्टस्य ग्रहणेऽपि परत्वाड्ढण् भवति ।

सरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु ॥ ९१ ॥

वृद्धे इति वर्तते । सरद्वत् शुनक दर्भ इत्येतेभ्यः फण् भवति यथासंख्यं भार्गवे वात्स्ये आग्रायणे चापत्येऽभिधेये । सारद्वतायनो भवति भार्गवश्चेत् सारद्वतोऽन्यः । शौनकायनो भवति वात्स्यश्चेत् शौनकोऽन्यः । दार्भायणो भवति आग्रायणश्चेत् दार्भिरन्यः । सरद्वत्शुनकशब्दौ बिदादिषु पठ्येते ।

द्रोणपर्वतजीवन्ताद्वा ॥ ९२ ॥

द्रोण पर्वत जीवन्ता इत्येतेभ्यः वृद्धापत्ये फण् च भवति । द्रौणायणः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । वृद्ध इत्येव । द्रौणिः ।

बिदादिभ्योनृष्यानन्तर्येऽञ् ॥ ९३ ॥

वृद्ध इति वर्तते । बिद इत्येवमादिभ्यः अनृषीणामानन्तर्ये अञ् भवति । बिदस्यापत्यं बैदः । बिद उर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात किदर्भ विश्वानर ऋष्टि-

षेण ऋतभाग हर्यश्व प्रियक अपस्तंब कुचवार सरद्वत् शुनक धेनु गोपवन शिग्रु बिन्दु भाजन तामज अश्वावतान श्यामाक श्यापर्ण गोपवनादिप्रतिषेधः प्राग्घरितादेरिति उद्दुं बहुत्वे-ऽञः उवेव भवति । हरित किन्दास वह्यस्क अर्कलूष वध्योग विष्णुवृद्ध प्रतिबोध रथन्तर गविष्ठिर निषाद निषादशब्दस्य सुधातुरकङ्चेत्यत्र नैषदकिरुक्तोऽनन्तरे वृद्धे परत्वादयमञ् मठर अयं गोपवनादिष्वपि मठराद्यञपि एते हरितादय इत्याचार्यस्मृतिः पृदाक सृदाक पुनर्भ्वादिष्वनन्तरेऽपत्ये पुनर्भू पुत्र दुहितृ ननांदृ परस्त्री परशुं च या तु सवर्णा परस्य स्त्री परस्त्री सा कल्याण्यादिषु पठते पारस्त्रियेणः । वृद्ध इत्येव अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वात् ऋष्यण् न भवति लौकिकगोत्रमात्र इत्येव। बिदो नाम कश्चित् तस्य बैदिः । अनृ-ष्यानन्तर्य इति किमर्थम् । पुनर्भूप्रभृतीनामनृषीणामानन्तर्ये अनन्तरेऽपत्ये अञ्वेदितव्यः ये तु ऋष्यपत्यानां नैरन्तर्ये प्रति-षेधमाचक्षते तेषां कौशिको विश्वामित्र इति न स्यात् ऋष्या-नन्तर्ये प्रतिषेधो नास्ति इन्द्रभूः सप्तमः । काश्यपनाभभारद्वा-जानां कतमोऽसीति तस्येदमित्यणा भविष्यतीति ।

गर्गादेर्यञ् ॥ ८४ ॥

वृद्ध इति वर्तते । गर्ग इत्येवमादिभ्यः वृद्धापत्ये यञ् भवति । गर्गस्यापत्यं पौत्रादिः गार्ग्यः । गर्ग वत्स वाजादसे अस इति किम् । सौवाजिः । संकृतिः अज व्याघ्रपात् विदभृत् पुलस्ति प्राचीनयोग पुलस्त्यशब्दात् ऋष्यपि पौलस्त्यः । स्त्रि-यामणि पौलस्त्यी यञि पौलस्त्यायनीति विशेषः। रैन अग्नि-वेश शङ्ख सठ धूम अवट मनस् धनंजय वृक्ष विश्वावसु जरम-रण लोहित संशित बभ्रु मंडु मंक्षु संकु संचुलि गुगुहलु जिगीषु

मनु मन्तु तन्तु मनायी ढण् प्राप्तः । भस्य ढत्यढ इति पुंवद्भावः कस्मान्न भवति कौडिन्यागस्ती इतिनिर्देशात् यदि यञि पुंवद्भावः स्यात् कुण्डिनीशब्दस्य पुंवद्भावे टिखे च कृते कौंडिन्य इति न स्यात् । सूनु कथक रूक्ष तलुक्ष तंड वतण्ड कपि कत सकल कुरुकत अयमनुशतिकादौ अनुडुह कंठ गोकक्ष अगस्त्य कुण्डनी यज्ञवल्क अभयजात विरोहित वृषगण रहोगण संडिल मुद्गल मुसल पराशर जतूकर्ण मन्त्रितः अस्मरथ शर्कराक्ष पूतिमाष स्थूर अरराक वामरथ पिंगल कृष्ण गोलुन्द उलूक तितंभ तितिव भिषज तिलज भंडित चिकित दिवहू इन्द्रहू एकहू एकलू पिप्पलु बृहदग्नि सुलाभिन् कुटीगु वकथ । वृद्ध इत्येव । आनन्तरो गार्गिः । कथमनन्तरो जामदग्न्यो रामः पाराशर्यो व्यास इति । गोत्राध्यारोपेण अनन्तरापत्ये ऋष्यणा भवितव्यम् । लौकिकगोत्रमात्र इत्येव । यो गोत्रस्याप्रवर्तको गर्गस्तस्यापत्यं वृद्धं गार्गिः ।

## मधुबभ्रोर्ब्राह्मणकौशिकयोः ॥ ८५॥

वृद्ध इति वर्तते । मधु बभ्रु इत्येताभ्यां यञ् भवति यथासंख्यं ब्राह्मणे कौशिकेऽत्राभिधेये । माधव्यो ब्राह्मणश्चेत् माधवोऽन्यः । बाभ्रव्यः कौशिकश्चेत् बाभ्रवोन्यः । बभ्रुशब्दो गर्गादिषु पठ्यते तस्येह नियमार्थं वचनम् । कौशिक एव यथा स्यात् गर्गादिषु पाठो लोहितादिकार्यार्थः बाभ्रव्यायणी । अथ गर्गे एव कौशिकग्रहणं कर्तव्यम् । इह करणं वृद्धार्थम् । ननु गर्गेपि वृद्धे यञ्विहित एवमेव तर्हि ज्ञापकं गणपाठे क्वचिदनन्तरापत्येऽपि यञ् भवति जामदग्न्यो रामः पाराशर्यो व्यास इति ।

कपिबोधादाङ्गिरसे ॥ ८६ ॥

वृद्ध इति वर्तते । कपिबोधशब्दाभ्यां यञ् भवति आङ्गिरसे अपत्यविशेषे । काप्यः आङ्गिरसश्चेत् । अन्यत्र इतोनिञ इति ढणि कापेयः । बौध्यः आङ्गिरसश्चेत् बौधिरन्यः । इहापि कपिशब्दस्य गर्गादिषु पाठः तस्य नियमार्थं वचनम् । अङ्गिरस एव यञ् । गर्गादिषु पाठो लोहिताद्यर्थः । काप्यायनी । मधुबोधयोस्तु यस्तयोरुभयं माधवी माधव्यायनी । बौधी बौध्यायनी ।

वतण्डात् ॥ ८७ ॥

आङ्गिरस इति वर्तते । वतण्डशब्दादाङ्गिरसे अपत्यविशेषे वृद्धे यञ् भवति । वातण्ड्यः । आङ्गिरस इत्येव । अनाङ्गिरसे शिवादिपाठादण् वातण्ड इति गर्गादिषु पाठाद् दनांगिरसे यञ् लोहितादिकार्यार्थः । वातण्ड्यायनी ।

स्त्रियामुप् ॥ ८८ ॥

आङ्गिरस इति वर्तते । वतण्डशब्दादाङ्गिरस्यां स्त्रियां यञ उप् भवति । वतण्डस्यापत्यं वृद्धा स्त्री वतण्डी । यञ उपि जातेरयोङ इति ङीविधिः । आङ्गिरस इत्येव । वातण्ड्यायनी शिवाद्यणि वातण्डा । वृद्धादन्यत्र वातण्डी ।

अश्वादेः फञ् ॥ ८९ ॥

वृद्ध इति वर्तते । आङ्गिरस इति निवृत्तम् । अश्व इत्येवमादिभ्यः वृद्धे फञ् भवति । अश्वस्यापत्यं आश्वायनः । अश्व अश्मन् शङ्ख शूद्रक कुञ्जादिषु गर्गादिषु च पठ्यते । विद पुट रोहिण खर्जार खज्जूर वटिल भंडिल भटल भडित भंडित प्रकृत रामोद क्षत्री वा काश्य काण वात गोलाक्ष अर्क स्वनच्चन

पत चक्र कुल अविष्ट पविन्द पवित्र गोमिन् श्याम धूम्र-बाग्मिन् विश्वंभर स्फुट कुट चुटि शपादात्रेये । साविरन्यः । जनक सनक खनक ग्रीष्म अर्ह बीज रोष विसंप विश्याला गिरि चपल चुप दास येत्र वृद्धत्याप्ताः तेभ्यः सामर्थ्यात् यूनि फञ् द्रष्टव्यः वैश्य वैल्य वाद्य आनडुह्य धाप्य जात शब्दात पुंसि जातेयोऽन्यः । अर्जुनः अस्य बह्वादिषु पाठो-नन्तरार्थः सृद्रक सुमनस् दुर्मनस् आत्रेयाद्भारद्वाजे । आत्रेयो न्यः । भारद्वाजादात्रेये बिदाद्यञि भारद्वाजोन्यः । उत्सः उत्सादिषु पाठोऽनन्तरार्थः आतव कितव शिव खदिर वृद्ध-इत्येव । आशिवः । लौकिकगोत्र इत्येव गोत्रस्याप्रवर्तको योऽश्वः तस्यापत्यमेकान्तरितमाश्विः ।

भर्गात्त्रैगर्ते ॥ १०० ॥

वृद्ध इति वर्तते । भर्गशब्दात् फञ् भवति त्रैगर्तेऽपत्य-विशेषे । भार्गायणो भवति त्रैगर्तश्चेद् भार्गिरन्यः ।

शिवादिभ्योऽण् ॥ १०१ ॥

वृद्ध इति निवृत्तम् । इत उद्र्ध्वं सामान्येनापत्ये त्यवि-विधानम् । शिव इत्येवमादिभ्यः अण् भवत्यपत्यमात्रे । इञादी-नामपवादः । शिवस्यापत्यं शैवः । शिव प्रोष्ठ प्रोष्ठिक चंड जंभ भूरि असमदादितोनञ इति ढण् प्राप्तः । कुठार अनभिम्लान संधिः मुनि ककुस्थ कोहड कहूय रोवाविरल बतण्ड स्त्रियां बातंड्या तृण कर्ण क्षीर ह्रदय परिषिक गोपिलका जटिलका बधिरका मंजीरक वृष्णिक खंजर खंजल रेभ आलेखन विश्रवण रवण विश्रवसोऽपत्यमिति विगृह्य विश्रवणरवणादेशौ प्रकृत्यन्तरे वा अव्यविकन्यायेन ताभ्यामेवाण् वर्तनाद विकट पिटक वृक्षक विभाग नभाक ऊर्णनाभ जरत्कारू उत्कोयस्तु रोहितिका आर्यश्वेता आभ्यां स्त्रीभ्यो ढण् प्राप्तः । सुपिष्ट

मयूर कर्ण खर्जुर कर्ण तक्षन् अत्र कारिलक्षणस्य इञो बाधाश्च स्त्विष्यत एव । तात्पर्यइति ऋष्टिषेण बिदादिष्वस्य पाठो व्यर्थः । गङ्गा अत्र नदीलक्षणस्याणो द्व्यच इति ढण् बाधकः तमपि बाधित्वा द्व्यचोनद्या इत्यण् प्राप्तः । तस्यापि तिकादिषु पाठात् फिञ् बाधकः स्यात् अयं गङ्गाशब्दः शुभ्रादिषु च पठ्यते । तेन त्रैरूप्यम् । गाङ्गः । गाङ्गायनिः । गाङ्गेयः । विपाश अत्रापि नदीमानुषीलक्षणस्याणः द्व्यच इति ढण् बाधकः तमपि द्व्यचोनद्या इत्यण् बाधते । तमपि बाधित्वा कुञादिलक्षणो फ्फ एव स्यात् द्वैरूप्यं चेष्यते । वैपाशः वैपाशायन्य इति यस्क लह्य दुह्य अयस्थूण भलन्दन विरूपाक्ष विरूपा भूमि इला सपत्नी द्व्यचोनद्या इति गणसूत्रम् । अन्यथा द्व्यच इति ढण् प्रसज्येत । त्रिवेणी त्रिवेणं च ।

नदीमानुषीभ्योऽदुभ्यस्तदाख्याभ्यः ॥ १०२ ॥

नदीमानुषीभ्य इत्यर्थनिर्देशः । नदीमानुषीवाचिप्रकृतिभ्यः अदुसंज्ञाभ्यः तदाख्याभ्यः अण् भवति ढणोपवादः । यमुनाया अपत्यं यामुनः प्रणेता इरावत्या अपत्यं ऐरावतः । ताद्रुचः । वितस्तायाः पलालशिराःवैतस्तः । नर्मदाया नीतो नार्मदः मानुषीभ्यः । चिन्तितायाः चैन्तितः । सुदर्शनायाः सौदर्शनः । स्वयंप्रभायाः स्वायंप्रभः । नदीमानुषीभ्य इति किम् । सौपर्णेयः । वैनतेयः । सुपर्णा वनिता च देव्यौ अन्येषां पक्षिणयौ । अदुभ्य इति किम् । चान्द्रभागायाः चान्द्रभागेयः । वायुवेगेयः । तदाख्याभ्य इति किम् । या काभ्यः प्रकृतिभ्योण् प्रार्थ्यते ता एवाख्या नामधेयानि नदीमानुषीणां यदि भवति तेनेह न भवति । शोभनाया अपत्यं शौभनेयः । पुरस्तादपवादोऽप-

मिति अनन्तरणं बाधते न उग्रवहिलं स्तुद्राभ्योवेति इयं पुलिकाया: पौलिकेर: ।

कुर्वृष्यन्धकवृष्णे: ॥ १०३ ॥

कुरव: अन्धका: वृष्णयश्च क्षत्रियेरवंशाख्या· ऋषय· श्चेह ग्राम्या मठपतयो वशिष्ठाद्या गृह्यन्ते । महर्षीणामहिंसादिव्रतोपपन्नानां अपत्यापत्यवत्संबंधो नास्ति । कुरु ऋषिअन्धकवृष्णिवाचिभ्यो वृद्धच: सामान्येनापत्ये अण् भवति । इञोऽपवाद: । कुरुभ्य: नाकुल: । साहदेव: । दौर्योधन: । ऋषिभ्य: वाशिष्ट: । वैश्वामित्र: । अन्धकेभ्य: श्वाफल्क: । रांधस: । श्वैत्रक: । वृष्णिभ्य: अदूर: प्रातिवाह: । वासुदेव: । आनिरुद्ध: । इह आत्रेय: इति परत्वाढ्ढण् यद्यपि भीमसेन: कुरु: जातसेन: ऋषि: उग्रसेनो ऽन्धक: विष्वक्सेनो वृष्णि: तथापि परत्वात्सेनान्तलक्षणोऽत्र इञ्‌ भवति मध्येऽपवादोऽयं पूर्वं निन्यं बाधते ।

मातुरुत्संख्यासंभद्रादे: ॥ १०४ ॥

मातृशब्दस्य संख्यासंभद्रादे: उकारश्चान्तादेशो भवति अण् चाधिकारात् । द्वयोर्मात्रोरपत्यं द्वैमातुर: । भरत: । शातमातुर: । सांमातुर: । भाद्रमातुर: । अभिधानवशात् जननीपर्यायस्य मातृशब्दस्य ग्रहणम् । संख्यासंभद्रादेरिति किम् । सौमात्र: । वैमात्रेय: । विमातृशब्द: शुभ्रादिषु पठ्यते ।

कन्याया: कनीन च ॥ १०५ ॥

कन्याया: कनीन इत्ययमादेशो भवति । अण् च तस्माढ्ढणोऽपवाद: । कानीनक: कर्ण: । कानीनो हि नारक: ।

विकर्णशुङ्गछगलाद्वत्सभरद्वाजात्रिषु ॥ १०६ ॥

विकर्ण शुङ्ग छगल इत्येतेभ्य: अण् भवति यथासंख्यं

वात्स्ये भारद्वाजे आत्रेये चापत्यविशेषे । वत्सभरद्वाजात्रिष्विवत्यत्र वत्सादयः शब्दाः उपचारात् वृद्धत्वान्तेषु वर्तमाना गृह्यन्ते वैकर्णो भवति वात्स्यश्चेत् वैकर्णिरन्यः काश्यपे वैकर्णेयः । शौङ्गो भवति भारद्वाजश्चेत् शौङ्गिरन्यः लिङ्गविशिष्टस्य ग्रहणे शुङ्गायाः अपत्यं शौङ्गो भवति भारद्वाजश्चेत् । अन्यत्र शौङ्गेयः । छागलो भवति आत्रेयश्चेत् छागलिरन्यः ।

पीलाया वा ॥ १०७ ॥

पीला तदाख्या मानुषी । पीलाया अपत्ये वा अण् भवति । पैलः । पैलेयः ।

ढण् च मण्डूकात् ॥ १०८ ॥

मण्डूकशब्दात् ढण् भवति चकारादण् च वा । तेन त्रैरूप्यम् । माण्डूकेयः । माण्डूकः । मण्डूकिः । स्त्रियां माण्डूकेयी । अणन्तस्य कौरव्यासुरिमाण्डूकादिति फटि कृते माण्डूकायनी । ठञन्तस्य माण्डूक्या ।

स्त्रीभ्यो ढण् ॥ १०९ ॥

इह स्त्रीग्रहणेन स्त्रियामित्येवं विहिताष्टाबादयः स्त्रीत्या गृह्यन्ते । स्त्र्यर्थग्रहणन्तु न भवति शुभ्रादिषु मातृशब्दस्य पाठात् ज्ञायते । स्त्रीत्यान्तेभ्यः ढण् भवत्यपत्ये । सौपर्णेयः । वैनतेयः । वायुवेगेयः । स्त्रीत्यग्रहणमिति विशेषणं किम् । स्त्र्यर्थे मा भूत् । इबिडः स्त्रिया अपत्यं दरदः अपत्यं ऐडबिडः दारदः पीलायावेत्यतो मण्डूकप्लुत्या वेति व्यवस्थितविभाषा वर्तते तेन वडवायाः वृषे वाच्ये ढण् भवति । वाडवेयो वृषः । अपत्ये वाडव इति । कुञ्चाकोकिलाभ्यामण् भवति । कुञ्चाया अपत्यं कौञ्चः । कोकिलाया अपत्यं कौकिलः ।

द्व्यचः ॥ ११० ॥

द्व्यचश्च स्त्रीत्यान्तात् अपत्ये ढण् भवति । मानुषीलक्षणस्या णोऽपवादः । दत्तायाः दात्तेयः । गुप्तायाः गौप्तेयः ।

इतोऽनिञः ॥ १११ ॥

स्त्रीभ्य इति निवृत्तम् । अविशेषेण स्त्रियाश्च विधानाद्व्यच इति वर्तते । इकारान्तान्मृदः अनिञन्तात् ढण् भवति । बलेरपत्यं बालेयः । नाभेयः । आत्रेयः । दौलेयः । इत इति किम् । दाक्षिः । अनिञ इति किम् । दाक्षायणः । द्व्यच इत्येव । मरीचेरपत्यं मारीचः ।

शुभ्रादेः ॥ ११२ ॥

शुभ्र इत्येव मादिभ्यः ढण् भवति । इञादीनामपवादः । शुभ्रस्यापत्यं शौभ्रेयः । शुभ्र विष्टपुर ब्रह्मकृत शतद्वार शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू विधवा ककसा रोहिणी रुक्मिणी विकचा विवमा इलिका दिशा शालूका अजवस्ति सकन्धि लक्ष्मणश्यामयोर्वाशिष्टे । लाक्ष्मणिरन्यः । श्यामायनोन्यः । अश्वादेरिति फञ् । गोधा । कृकलास । प्राणि विकर्णाचि प्रवाहण भरत भागर मण्ट्र मकुष्ट सुकण्डु मृषंडु कर्पूर इतर अन्यतर आलीट सुदत्त सुदक्ष सुनामन् सुदामन् कद्रु तुद अकशाप कुमारिका कुवेरिका कुमेरुका जिह्माशिन् परिधि वायुदत्त सलाका सवला स्वच्छर अम्बिका अशोक गन्ध पिङ्गला खरोन्मत्ता कुदत्ता कुसम्बा शुक्र वलीवर्दिन् विस्र वीज श्वन् अश्व अजि बिमातृ आकृतिगणश्चायम् । तेन गाङ्गेयः पाण्डवेय इत्यादि सिद्धम् ।

विकर्णकुषीतकात्काश्यपे ॥ ११३ ॥

विकर्णकुषीतकशब्दाभ्यां ढण् भवति काश्यपे अपत्यवि-

शेषे । वैकर्णेयः काश्यपश्चेत् । वैकर्णिरन्यः । कौषीतकेयः । काश्यपश्चेत् कौषीतकिरन्यः ।

भ्रुवो वुक् ॥ ११४ ॥

भ्रूशब्दादपत्ये ढण् भवति वुक् चागमः । भ्रौवेयः ।

कल्याण्यादीनामिनङ् ॥ ११५ ॥

कल्याणी इत्येवमादीनां ढण् भवति इनङादेशश्च येऽत्र स्त्रीत्यान्ताः शब्दाः तेषामादेशार्थं वचनम् । ढण् पूर्वेण सिद्धः । अन्येषामुभयार्थं वचनम् । कल्याण्या अपत्यं काल्याणिनेयः । सौभागिनेयः । कल्याणी सुभगा दुर्भगा बन्धकी अनुसृष्टि जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री जारस्त्री ।

कुलटाया वा ॥ ११६ ॥

कुलान्यटतीति कुलटा । अत एव निपातनात् पररूपम् । कुलटायाः वा इनङादेशो भवति ढण् स्त्रीभ्य इत्येव सिद्धः । कौलटिनेयः । कौलटेयः । अनियतपुंस्कत्वविवक्षायां परत्वात् क्षुद्रालक्षणोढ्रण् । कौलटेरः ।

चटकाराणैरः ॥ ११७ ॥

चटकशब्दाराणैरो भवति । चटकस्यापत्यं चाटकैरः । लिङ्गविशिष्टस्यापि ग्रहणम् चटकायाः अपत्यं चाटकैरः । स्त्रीढणः परत्वात् णैरः । स्त्रियामपत्ये उडवक्तव्यः । चटकस्य चटकाया वा अपत्यं स्त्री चटका । हृदुप्युबिति स्त्रीत्यस्योप् पुनष्टाप् ।

गोधाया णारः ॥ ११८ ॥

गोधाशब्दादपत्ये णारो भवति । गौधारः । रणासिद्धे

चारवचनं ज्ञापकं अण्येभ्योपि भवतीति । अडस्यापत्यं आडारः । पण्डस्यापत्यं पाण्डारः । पक्षस्य पाक्षारः ।

ढ्रण् ॥ ११९ ॥

ढ्रण् च भवति गोधाशब्दात् गौधेरः । शुभ्रादिषु पाठात् गोधेय इति च भवति ।

क्षुद्राभ्यो वा ॥ १२० ॥

अनियतपुंस्का अङ्गहीना वा क्षुद्राः क्षुद्राभ्य इत्यर्थनिर्देशः । क्षुद्रावाचिप्रकृतिभ्यः स्त्रीलिंगाभ्यः वा ढ्रण् भवति । दास्या अपत्यं दासेरः । दासेयः । नट्या नाटेरः । नाटेयः । काणायाः काणेरः । काणेयः । ढ्रश्च इत्ययं ढण् मण्येऽपवादः पूर्वस्य नदीमानुषीलक्षणस्याणो बाधकः ।

श्वसुश्छण् ॥ १२१ ॥

स्वसृशब्दात् ऋकारान्तपूर्वान्तात् अपत्ये छण् भवति । अणोऽपवादः । मातृष्वस्रीयः । पैतृष्वस्रीयः । स्वसुरिति कृतषत्वग्रहणं किम् । भ्रातृस्वसुरपत्यं भ्रातृस्वस्रः । उरिति किम् । मातुःस्वसुरपत्यं मातुष्वस्रः । वा स्वसृपत्योरित्यनुप् ।

चतुष्पाद्भ्यो ढञ् ॥ १२२ ॥

चत्वारः पादाः यासां ताः चतुष्पादः । चतुष्पाद्वाचिप्रकृतिभ्यः स्त्रिलिङ्गाभ्यः ढञ् भवत्यणादीनामपवादः । कामण्डलेयः । सैतिवाहेयः । माद्रवाहेयः । जाम्बेयः । ढञ् सति तस्मादुत्पन्नस्य युवत्यस्योऽभवति न ढणि ।

गृष्ट्यादेः ॥ १२३ ॥

गृष्टि इत्येवमादिभ्यः शब्देभ्यः ढण् भवत्यणादीनामपवादः । गृष्टेरपत्यं गार्ष्टेयः अचतुष्पाद्वचनं इह गृष्टिशब्दो गृह्यते ।

वृष्टि हृष्टि हलि वालि विद्रुकादि अभवत्वित मित्रयोरपत्यं मैत्रेयः । भ्रौणहत्यादिना यकारादेः त्वं निपात्यते । बहुषु य-स्कादिभ्यो वृद्ध इति लुप् । मित्रयवः ।

क्षत्राद् घः ॥ १२४ ॥

क्षत्रशब्दादपत्ये वा भवति । क्षत्रस्यापत्यं क्षत्रियः । जातावभिधानम् । अन्यत्र क्षात्रिः ।

राजश्वसुराद्यः ॥ १२५ ॥

राजश्वसुरशब्दाभ्यां अपत्ये यो भवति राज्ञोऽपत्यं राजन्यः । इहापि जातावभिधानम् । राजनोऽन्यः । श्वसुरस्यापत्यं श्वसुर्यः । ख्यातस्य सम्बन्धवचनस्य ग्रहणात् संज्ञायां श्वासुरिः ।

कुलाड्ढकञ् ॥ १२६ ॥

कुलशब्दादपत्ये ढकञ् भवति । यश्च कुलस्यापत्यं कौलेयकः । कुल्यः । इहापि भवति ईषदसिद्धं कुल बहुकुलं वासुपोबहुप्राकुरिति बहुत्यः बहुकुलस्यापत्यं बाहुकुलेयकः । बहुकुल्यः ।

खः ॥ १२७ ॥

कुलशब्दात् खश्च भवति । कुलीनः । उत्तरत्र खस्या-नुवृत्तिर्यथा स्यादिति योगविभागः ।

सादेः ॥ १२८ ॥

सह आदिना वर्तते इति सादिः । सादेः कुलशब्दात् खो भवति । आढ्यकुलीनः । राजकुलीनः । क्षत्रियकुलीनः । प्रत्ययविधौ तदन्तविधिरितिपूर्वेण न सिद्ध्यति ।

महतोऽञ्खञौ ॥ १२९ ॥

महच्छब्दपूर्वात् कुलशब्दात् अञ्खञौ इत्येतौ भवतः । महतः आत्वविषये अभिधानं माहाकुलः । माहाकुलीनः । केचित्खस्यानुवृत्तिमिच्छन्ति । महाकुलीनः । आत्वविषये इति किम् । महतां कुलं महाकुलं तस्मात्खादेरिति खः । महत्कुलीनः ।

दुसो ढण् ॥ ३० ॥

दुःशब्दपूर्वात् कुलादपत्ये ढण् भवति । पापं कुलं दुःकुलम् इदुःकीयदुम्मु इति सत्वषत्वे । दुष्कुलस्यापत्यं दौष्कुलेयः । केचित् खमप्यनुवर्तयन्ति । दुष्कुलीनः ।

स्वसुश्छः ॥ १३१ ॥

स्वसृशब्दादपत्ये छो भवत्यणोऽपवादः । स्वस्रीयः ।

भ्रातुर्व्यश्च ॥ १३२ ॥

भ्रातृशब्दादपत्ये व्यो भवति छश्च अणोऽपवादः । भ्रातुरपत्यं भ्रातृव्यः । भ्रात्रीयः । कथं लोके भ्रातृव्यशब्देन सपत्नोऽभिधीयते उपचारात् । एकद्रव्याभिलाषश्च उपचारनिमित्तं सपत्नी इव सपत्नः शत्रुः । पृषोदरादिपाठादकारो निपात्यते ।

रेवत्यादेष्ठण् ॥ १३३ ॥

रेवती इत्येवमादिभ्यः अपत्ये ठण् भवति । अणादीनामपवादः । रेवत्या अपत्यं रैवतिकः । रेवती अश्वपाली मणिपाली द्वारपाली वृकवंचित् वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष ।

वृद्धस्त्रियाः क्षेपे णश्च ॥ १३४ ॥

पौत्राद्यपत्यं वृद्धं क्षेपः कुत्सा । वृद्धस्त्रीवाचिशब्दादप-

त्ये णो भवति ठण् च क्षेपे गम्यमाने । गार्ग्यस्य अपत्यं युवा गार्गो जाल्मः गार्गिको जाल्मः । ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायनो जाल्मः ग्लुचुकायनिको जाल्मः । क्षेपश्चात्र प्रतिषिद्धाचरणेन पितुरज्ञानाद्वा गम्यते । वृद्ध इति किम् । कारिकेयो जाल्मः । स्त्रिया इति किम् । औपगविः जाल्मः । क्षेप इति किम् । गार्गेयो माणवकः ।

दोष्ठण् सौवीरेषु प्रायः ॥ १३५ ॥

वृद्धग्रहणं क्षेपग्रहणं चानुवर्तते । सौवीरेष्विति वृद्धविशेषणम् । सौवीरेषु यद्वृद्धवाचि दुसंज्ञं तस्मादपत्ये प्रायष्ठण् भवति क्षेपे गम्यमाने वेति वक्तव्ये प्रायोग्रहणं परिगणनार्थम् । भागपूर्वपदो वित्तिर्द्वितीयस्तार्णविन्दवः तृतीयस्त्वाकशापेयो वृद्धाट्ठण् बहुलं ततः । भागवित्तेरपत्यं युवा भागवित्तिकः । भागवित्तायनः । तार्णविंदवस्यापत्यं युवा तार्णबिन्दविकः । तार्णविन्दविः अकशाप इति शुभ्रादिषु आकशापेयस्यापत्यं युवा आकशापेयिकः । आकशापेयिः । दुग्रहणं स्त्रीनिवृत्त्यर्थं अविशेषेणेष्यते सौवीरेष्विति किम् । औपगविर्जाल्मः । क्षेप इत्येव । भागवित्तायनो माणवकः ।

फेश्छ च १३६ ॥

वृद्धग्रहणं क्षेपग्रहणं सौवीरेष्विति च वर्तते । फिञन्तात् सौवीरेषु वृद्धात् अपत्ये छो भवति ठण् च क्षेपे गम्यमाने । दोरित्यधिकारात् फेरित्यत्र फिञ एव संप्रत्ययः यमुन्दतिकादिः यामुन्दायनीयः । यामुन्दायनिकः । प्राय इत्यनुवर्तनादणपि भवति । तस्य फिञन्तापरस्य जिसयराजायोयून्युवणिजेरित्युप् यामुन्दायनिर्जाल्मः । सुयामन् सौयामायनिः तस्यापत्यं युवा सौयामायनीयः । सौयामायनिकः ।

अणि । सौयामायनिः । वृषस्य वाष्र्यायणिः । फिञः संनियोगे वृद्धाभावे वक्ष्यते वार्ष्यायणेरपत्यं वार्ष्यायणीयः । वार्ष्यायणिकः । अणि वार्ष्यायणिः । क्षेप इत्येव । यामुन्दायनिर्माणवकः । अणेव भवति । सौवीरेष्वित्येव । तैकायनेरपत्यं युवा अण् तस्योप् । तैकायनिर्जाल्मः ।

यमुन्दश्च सुयामाच वार्ष्यायणिः फिञः स्मृताः ।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित्स्मरेत् ॥

फाण्टाहृतेर्णः ॥ १३७ ॥

क्षेप इति निवृत्तम् । वृद्धग्रहणं सौवीरेष्विति च । जिव्यराजर्षादित्यत्र अणिञोरुप्यश्चाब्रह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति उक्ताभूदिति । णित्कारणं फिञप्यत्र भवतीति वक्तव्यम् । फांटाहृतायणिर्माणवकः । सौवीरेष्वित्येव फांटाहृतायनः । सौवीरेषु मिमतशब्दाराच्च फिञौ वक्तव्यौ । मैमतः । मैमतायनिः । सौवीरेष्वित्येव । मैमतिः ।

कुर्वादिभ्यो ण्यः ॥ १३८ ॥

सौवीरेष्विति निवृत्तम् । कुरु इत्येवमादिभ्यः अपत्ये ण्यो भवति । आदौ णकार जिव्यराजार्षादित्यत्र विशेषणार्थः । कुरोरपत्यं कौरव्यः । राजार्षात् कुरुशब्दात् ज्यो वक्ष्यते तस्य द्विसंज्ञकत्वाद्बहुषु लुप् । तिकादिषु कौरव्यायणिः । कुरु गर्ग रथंजय अतिमारक रथकाराज्जातौ वावदूक सम्राजः क्षत्रिये कवि पितृमत् ऐन्द्रजालि धातु अयेजि दामोष्णीषि गणकारि कैसौरि कांपिजलादि एन्द्रजाल्यादिभ्यः ततोऽनीति यूनि रायः । क्रोड कुट सलाका मुर खडाक एमुक शुद्रसी केशिनी स्त्रीलिङ्गनिर्देशसामर्थ्यात् पुंवद्भावो न भवति ।

सूर्पणाय श्यावनाय श्यावरथश्यावपुत्र सत्यंकार वडभि: कार पथिकारिन् मूढ शीक्ष भूहेतु शकलान इनपिण्डी वामरथ वामरथ्यस्य सकलादिकार्यं भवति सकलादयो गर्गाद्यन्तः पातिनः बहुत्वे ढ़कभवति वामरथाः । स्त्री वामरथ्यायनी वामरथ्यायनः वामरथ्यस्य छात्राः वामरथाः शकलादिभ्यो वृद्ध इत्यराभवतीति । वामरथानां संघः वामरथः । संघादिना अण् ।

## सेनान्तलक्षणकारिभ्य इञ् ॥ १३९ ॥

कारिशब्दः कारुवाचि सेनांतास्मृदः लक्षणशब्दात कारिवाचिभ्यश्चापत्ये इञ् भवति रायश्च । हारिषेणयः । हारिषेणिः । भैमसेन्यः । भैमसेनिः । जातसेन्यः । जातसेनिः । लाक्षण्यः । लाक्षणिः । कारिभ्यः कौंभकार्यः । कौंभकारिः । तान्तुवाय्यः । तान्तुवायिः । लक्षन् शब्दात् शिवादिलक्षणोऽण् स इञो बाधको न तु ण्यस्य । तेन द्वैरूप्यम् । ताक्षणः । ताक्षण्यः ।

## तिकादेः फिञ् ॥ १४० ॥

तिक इत्येवमादिभ्यः अपत्ये फिञित्ययं त्यो भवति । तिकस्यापत्यं तैकायनिः । तिक कितव संज्ञा बाल शिखा उरस् शाठ्य सैन्धव यमुन्द रूप्य नाडी सुमित्रा कुदेवर देवरथ तितिलिन् खिलालिन् उरस कौरव्य द्विसंज्ञस्येदं ग्रहणम् उरसब्देन राष्ट्रसमानशब्देन साहचर्यात् कथं कौरव्यः पिता कौरव्यः पुत्रः । अजपयान्तादिञ् तस्योप् । लांकव गौकक्ष्य भौरि कि चौयमत चैटयत सैकयत दौंजयत त्वजवत् चंद्रमस् शुभ गङ्गा वरेण्य बंध आरद्धा वाह्लीक खल्यका लोयका सुयामन् उदन्या यज्ञ यदिहायृद्धं दुसंज्ञ पठ्यते तस्य नित्यार्थं वचनम् ।

कौशल्येभ्यः ॥ १४१ ॥

अपत्ये फिञ् भवति । बहुवचनेन कर्मारछागवृषा गृह्यन्ते । कोशलस्यापत्यं कौशल्यायनिः । सर्वत्र मूलप्रकृति. फिञ् तस्यायनादेशे कृते कौशल्य इति । विकृतनिर्देशात् युट् निपात्यते । एवं दागव्यायनिः । कार्मार्यायणिः । छाग्यायनिः वार्ष्यायणिः । राष्ट्रसमानशब्दात् कौशलात् ञ्यो वक्ष्यते कर्मारशब्दात् कारिलक्षणो ण्योऽपि भवति इञः प्रयोगो नोपलभ्यते ।

द्व्यचोऽणः ॥ १४२ ॥

अणंतात् द्व्यचो मृदः अपत्ये फिञ् भवति इञोऽपवादः । कर्तुरपत्यं कार्त्रायणिः । पोतुरपत्यं पौत्रः तस्यापत्यं पौत्रायणिः। एवं शैवायनिः । द्व्यच इति किम् । औपगविः । अण इति किम् । दाक्षिः ।

वा वृद्धाद्दोः ॥ १४३ ॥

पौत्राद्यपत्यं वृद्धं अवृद्धं यद्दुसंज्ञं तस्मादपत्ये वा फिञ् भवति । वायुरथायनिः । वायुरथिः । आदित्यगतायनिः । कारिशब्दात्परत्वादनेन भवितव्यम् । नापितायनिः । ण्योपि भवति नापित्यः । इञोभिधानं नास्ति । अवृद्धादिति किम् । आकंपनायनः । औपगविः । दोरिति किम् । आश्वग्रीविः ।

वाकिनादेः कुक् ॥ १४४ ॥

वेति वर्तते वाकिन इत्येवमादिभ्यः अपत्ये वा फिञ् भवति यदा फिञ् तदा कुकागमः । वाकिनस्यापत्यं वाकिनकायनिः । वाकिनिः । गारेवस्यापत्यं गारेवकायनिः ।

गारेयिः । वाकिन गारेव कार्कश्य काक लङ्क वर्म्मिवर्म्मिणो-र्नरवं च । यदिहावृद्धं द्रुसंज्ञं तस्य कुगर्थं वचनं अन्यस्यो-भयार्थम् ।

पुत्रान्ताद्वा ॥ १४५ ॥

वा वृद्धाद्दोरिति वर्तते । पुत्रान्तान्मृदः द्रुसंज्ञकात् वा कुगागमो भवति फिञि परतः । प्रकृतेन वाग्रहणेन फिञ् विकल्प्यते अनेन कुक् । तेन त्रैरूप्यम् । वासवदत्तापुत्रस्यापत्यं वासवदत्तापुत्रकायणिः । वासवदत्तापुत्रायणिः । वासवदत्ता-पुत्रिः । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः ।

फिरदोः ॥ १४६ ॥

स्यान्तरोपादानात् फिञि निवृत्ते तत्संबद्धः कुगपि निवृत्तः । वेति वर्तते अदोर्मृदः अपत्ये फिर्भवति वा । त्रिपृष्टायनिः । त्रैपृष्टिः । औविजयायनिः । औविजयिः । ग्लुचुकायनिः । ग्लौ-चुकिः । वेति व्यवस्थितविभाषा तेनेह न भवत्येव । दाक्षिः । प्लाक्षिः । अदोरिति किम् । रामदत्तिः ।

मनोर्जातौषुक्काञ्यौ ॥ १४७ ॥

मनुशब्दात् अञ् य इत्येतौ स्यौ भवतः षुक्कागमः समुदायेन जातौ गम्यमानायाम् । मानुषः । मनुष्यः अपत्याप-त्यवत्संबंधद्वारेण व्युत्पत्तिमात्रम् क्रियते परमार्थतस्तु रूढिश-ब्दावेतौ । अत एव यञिञोरिति बहुषूप् भवति । मानुषा इति । जाताविति किम् । अपत्यमात्रे अण् भवति लोहिता-दिपाठात् पौत्रादौ यञि तूष्भवति । मानव्यः । मानव्यौ । मनवः । स्त्री मनव्यायनी । जाताविति किम् । अपत्यमात्रे औत्सर्गिकः अणेव भवति ।

पुरुदेवस्य पौत्रादावर्ककीर्तिर्जिताहितः ।
पालयामास लक्ष्मीवान् मानवो मानवी प्रजाः ॥
वृद्धापत्यविवक्षायां तु गर्गादित्वाद्यञा भवितव्यम् ।
अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ॥
नकारस्य च मूर्द्धन्यः तेन सिद्ध्यति माणवः ।
नेदं यत्वार्थं बहु वक्तव्यम् माणवचरकात्
खञिति निपातनात् सिद्धम् ।

द्रिः ॥ १४८ ॥

यानि ऊर्द्ध्वमा पादपरिसमाप्तेस्तयान्वक्ष्यामः द्रिसंज्ञास्ते वेदितव्याः । वक्ष्यति राष्ट्रशब्दाद्राज्ञोऽञ् । पाञ्चालः । पाञ्चालौ । पञ्चालाः । सत्यां द्रिसंज्ञायां द्रेर्बहुषु तेनैवास्त्रियामित्युप् सिद्धः ।

राष्ट्रशब्दाद्राज्ञोऽञ् ॥ १४९ ॥

राष्ट्रं जनपदः राजशब्दश्चेह क्षत्रियपर्यायः । राष्ट्रशब्दाद्राजवाचिनः अपत्येऽञ् भवति स्वभावतः पंचालादिशब्देन राष्ट्रं राजा चाभिधीयते । अथवा पंचालानां निवासो जनपद इति निवासार्थे आगतस्याणो जनपद उसिति उषि कृतेऽवरकालेनापि पंचालशब्देन क्षत्रियशब्दो लक्ष्यते यथा देवदत्तस्य पितेति पंचालस्यापत्यं पाञ्चालः । पाञ्चालौ । पाञ्चलाः । ऐक्ष्वाकः । ऐक्ष्वाकौ । इक्ष्वाकवः । इक्ष्वाकुशब्दस्य अञि ओगुहत्येत्यादिना उत्वं निपात्यते । राष्ट्रशब्दादिति किम् । औविजयस्य औविजयिः । द्रुह्योः द्रौह्यराः । राज्ञ इति किम् । पञ्चालो नाम ब्राह्मणः तस्यापत्यं पाञ्चालिः ।

शाल्वेयगान्धारिभ्यां ॥ ५० ॥

शाल्वा नाम क्षत्रिया तस्माद्भ्यच इति ढणि शाल्वेयः । शाल्वेय गांधारि इत्येताभ्यां राजशब्दाभ्यां अञ् भवति अञो-

पवादे द्वित्कुरुनाद्यजादकोशलाञ्ज्य इति ञ्ये प्राप्ते वचनम् । शाल्वेयस्यापत्यं शाल्वेयः । गांधारेरपत्यं गांधारः । गांधारी । बहुषूपि गांधारयः ।

द्व्यच्मगधकलिङ्गसूरमसादण् ॥ ५२ ॥

राष्ट्रशब्दाद्राज्ञ इति वर्तते । द्व्यचो मृदः मगध कलिङ्ग सूरमस इत्येतेभ्यश्च अण् भवति । अञोऽपवादः । आङ्गः । वाङ्गः । सौह्मः । पौण्ड्रः । मागधः । कालिङ्गः । सौरमसः । सर्वत्र बहुषूप् । अञैव सिद्धे किमर्थमण् विधीयते द्व्यचोऽण इति फिञ् यथा स्यात् नास्त्यत्र विशेषः सर्वस्यैव युवत्यस्य द्रेरुत्तरस्य उबिष्यते । इह तर्हि विशेषः राजसमानशब्दराष्ट्रात् तस्य राजन्यपत्यवदिति वक्ष्यते । अङ्गानां राजा आङ्ग इति अणि सति आङ्गस्यापत्यं आङ्गायनिः । द्व्यचोण इतिफिञ् युवत्योयं न भवतीति उप् नास्ति । अपि च अञि सति संघाद्यर्थविवक्षायां अण् प्रसज्येत अणि सति वृद्धचरणाञ्जिदितिवुन् भवति । आङ्गक वाङ्गकः । मागधकः । कालिङ्गकः । सौरमसकः ।

द्वित्कुरुनाद्यजादकोशलाञ्ज्यः ॥ ५३ ॥

दुसंज्ञान्मृदः इकारांतात् कुरुशब्दात् नकारादेः अजादकोशलशब्दाभ्यां च ञ्यो भवत्यञोऽपवादः । दो आम्बष्टस्यापत्यं आम्बष्ठ्यः । सौवीरस्य सौवीर्यः । कांबचस्य कांवच्यः । दार्वस्य दार्व्यः । द्व्यच्लक्षणो फिञ्परत्वादेतेन बाध्यते । इकारान्तात् अवन्तेरावन्त्यः । कुन्तेः कौन्त्यः । वसन्तेर्वासन्त्यः । तपरकरणं किम् । कुमारी नाम जनपदः क्षत्रियश्चास्ति तस्यापत्यं कौमारः । कुरोः कौरव्यः । नादेः निचकस्य नैचक्यः । निषधस्य नैषध्यः । नीपस्य नैप्यः । अजादस्य आजाद्यः । कोशलस्य कौशल्यः । सर्वत्र बहुषूप् ।

शाल्वावयवप्रत्यग्रथकलकूटास्मकादिञ् ॥ ५४ ॥

शल्वा नाम मानुषी क्षत्रिया तस्या अपत्यं द्व्यच इति ढणि शाल्वेय इत्युषि कृते निपातनादणपि भवति । शाल्वः । क्षत्रियः तस्य निवासो जनपदः शाल्वः । तदवयवाः उदुम्बरास्तिलखला मद्रकारायुगन्धराः । भुलिङ्गा शरदण्डाश्च शाल्वावयवसंज्ञिताः । शाल्वावयवेभ्यो राजवाचिभ्यः प्रत्यग्रथिः । कालकूटिः । आस्मकिः । सर्वत्र बहुषूप् येऽञ्यः ।

पाण्डोर्ड्यण् ॥ ५५ ॥

राष्ट्रशब्दाद्राज्ञ इति वर्तते पाण्डुशब्दाड्ड्यण् भवत्यपत्येऽर्थे । पाण्डोरपत्यं पाण्ड्यः डकार टिखार्थः णकारः ञ्नित्यहृद्रक्तविकार इति पुंवद्भावप्रतिषेधार्थः । पाण्ड्या भार्या अस्य पाण्ड्याभार्यः । कथमयं प्रयोगः असिद्धितीयो न ससार पांडवः पाण्डवा यस्य दासाः इति येन जनपदेन समानशब्दो राजा तस्य जनपदस्य स्वामी यदि विवक्षितः तदायं विधिर्वेदितव्यः अन्यत्रोत्सर्ग एव भवति । इह प्रकरणे राजसमानशब्दात् राष्ट्रात् तस्य राजन्यपत्यवदिति वक्तव्यम् । राजसमानशब्दात् राष्ट्रात् तस्येति तासमर्थात् राजन्यभिधेये अपत्य इव त्यविधिर्भवति पञ्चालानां राजा पाञ्चालः । शाल्वेयानां राजा शाल्वेयः । एवं आङ्गः । आम्बष्ठ्यः । औदुम्बरिः । पांडवानां राजा पाण्ड्यः । सर्वत्र बहुषूप् । अस्मादपत्यविवक्षायां वावृद्धाद्धोरिति फिञ् । पाञ्चालायनिः ।

उप् चोलादेः ॥ ५६ ॥

राष्ट्रशब्दाद्राज्ञ इति वर्तते । चोलादेः परस्य उप् भवति कस्य संभावादणञोः । चोलस्यापत्यं चोलः । केरलः । कंबोजः ।

शकः । यवनः । आदिशब्दः प्रकारवाची तस्य राजनीति वर्त्तते चोलानां राजा चोलः ।

## कुन्त्यवन्तकुरुभ्यः स्त्रियाम् ॥ ५७ ॥

कुन्ति अवन्ति कुरु इत्येतेभ्य उत्पन्नस्य द्रुरुप् भवति स्त्रियामभिधेयायाम् । कुन्ती । अवन्ती । कुरूः । द्विटकुरुनाद्यजादकोशलाज्य इत्यस्य उपि कृते इतोमनुष्यजातेरिति ङीविधिः । कुरुशब्दादूरुतः इति ऊत्यः । स्त्रियामिति किम् । कौरव्यः ।

## अतोऽप्राच्यभर्गादेः ॥ ५८ ॥

स्त्रियामिति वर्त्तते । अतस्त्यस्य उब्भवति स्त्रियामभिधेयायां प्राच्यान् भर्गादींश्च वर्जयित्वा । कुन्त्यादित्यः उब्वचनं ज्ञापकम् इह अत इति तदन्तविधिर्न भवति । सामर्थ्यादणञोरुप् भवतीति वेदितव्यम् अपाच्यो नाम राष्ट्रसमानशब्दो राजा तस्यापत्यं स्त्री अपाच्या अत उपि टाप् । एवं सूरसेनी । मद्रस्यापत्यं स्त्री मद्री । अण उपि जातिलक्षणो ङीविधिः । दरदो ऽपत्यं स्त्री दरद् । अत इति किम् । औदुम्बरी । शाल्वावयवत्वादिञ् इतोमनुष्यजातेरिति ङीविधिः । अप्राच्यभर्गादेरिति किम् । प्राच्या येराष्ट्राभिधाना राजानः तेभ्य उप् प्रतिषिध्यते । पांचाली । वैदेही । पैप्पली । आङ्गी । वाङ्गी । सौह्मी । पौण्ड्री । मागधी । कालिङ्गी । भर्गादेरप्राच्यार्थ उप् प्रतिषेधः । भर्गस्यापत्यं स्त्री भार्गी । करूसस्य कारूसी भर्ग करूस केकय कश्मीर सेल्वासुस्थाल उरस कौरव्य यथभाद्यपैण उपि कुरूः अनेनानुपि कौरव्येति यौधेयः । सौभ्रेयः शौभ्रेयग्रावाणेयत्रिगर्भभरत उशीनरकस्य पुनरकारस्य यौधेयादिभ्यः द्रुसंज्ञकेभ्यः परस्योप् प्राप्तः प्रतिषिध्यते उच्यते पर्श्वादेर्णिति द्रुसंज्ञकोण् स्वार्थिको वक्ष्यते तस्यायं प्रतिविधिः न तु राष्ट्रसमानशब्दा-

द्‌ापत्यस्य उबुच्यमानः कथं स्वार्थिकस्य भिन्नप्रकरणस्य रुडभवति, इदमेव यौधेयादिभ्यः प्रतिषेधवचनं ज्ञापकं भिन्नप्रकरणस्यापि द्रेरुडभवति आपत्यग्रहणेन गृह्यते इति किमेतस्य ज्ञापने प्रयोजनं इह स्त्रियामुप् पशुः रक्षाः असुरी इति पशु रक्षस् असुर इति राष्ट्रशब्दाराजानः एषामपत्यः संघः स्त्रीत्वविशिष्टो विवक्षित इति अणजोरागतयो उप् चोलारिति उपि कृते पुनः पश्वादेरति स्वार्थिकोण् तस्यापि स्त्रियामनेनोप् सिद्धः ।

इत्यभयनन्दिविरचितायां जैनेंद्रमहावृत्तौ तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः ।



तेन रक्तं रागात् ॥ १ ॥

रज्यतेऽनेन शुक्लं वस्त्विति रागः कुसुम्भादि द्रव्यं तेनेति भासमर्थात् रागविशेषवाचिनो मृदः रक्तमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति । कषायेण रक्तं वस्त्रं काषायम् । हारिद्रम् । कौसुम्भम् । माञ्जिष्टम् । रागादिति किम् । देवदत्तेन रक्तम् । पुंल्लोघः प्रायेणेत्येतद्घञ्विधाने अपेक्ष्यते तेन वर्णविशेषस्य रागस्य ग्रहणादिह न भवति । पाणिना रक्तमिति इहोपमानाद्भवति काषायौ गर्दभस्य कर्णौ हारिद्रौ । कुक्कुटस्य पादाविति ।

नीलपीतादकौ ॥ २ ॥

नील पीत इत्येताभ्यां भांताभ्यां रक्तमित्येतस्मिन्नर्थे यथासंख्यं अ क इत्येतौ त्यौ भवतः । नीलेन रक्तं नीलम् । लिङ्गविशिष्टस्यापि ग्रहणम् । नील्या रक्तं नीलम् । पीतेन रक्तं पीतकम् ।

लाक्षारोचनाशकलकर्द्दमाट्ठण् ॥ ३ ॥

लाक्षादिभ्यो भासमर्थेभ्यो रक्तमित्येतस्मिन्नर्थे ठण् भवति । अणोऽपवादः । लाक्षया रक्तं लाक्षिकम् । शाकलिकम् । सकलकर्द्दमाभ्यामणपीष्यते ।

भाद्युक्तः कालः ॥ ४ ॥

तेनेति वर्तते भविशेषवाचिनो मृदः भासमर्थेत् युक्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति योऽसौ युक्तः श्चेत् कालस्तेन स भवति नित्ययुक्तौ हि भकालौ न तयोः सन्निकर्षविप्रकर्षौ स्तः तत्कथं पुष्यादिना भेन युक्तः काल इत्युच्यते व्यभिचाराभावात् नैष दोषः । इह पुष्यादिसमीपस्थे चन्द्रमसि पुष्यादयः शब्दाः वर्तमाना गृह्यन्ते ।

पुष्येण युक्तः कालः पुष्यसमीपगतेन चन्द्रमसा युक्त इत्यर्थः । पौषी रात्रिः पौषमहः । तिष्यपुष्ययोर्भाणीति यकारस्य खम् । माघी रात्रिः । माघमहः । भादिति किम् । चन्द्रमसा युक्ता रात्रिः काल इति किम् । पुष्येण युक्तश्चन्द्रमाः ।

उसभेदे ॥ ५ ॥

अभेदो नानाविशेषः पूर्वेण विहितस्योस् भवति न चन्द्रेण युक्तस्य कालस्य भेदो रात्र्यादिविशेषोऽभिधीयते । अद्य पुष्यः । अद्य कृत्तिकाः । अद्य रोहिणयः । युक्तवदुसिलिङ्गसंख्य इति युक्तवद्भावः । अत्र यावान् कालः त्रिंशन्मुहूर्तमात्रो येन युक्तो न तस्य भेदोऽभिधीयते । अभेद इति किम् । पौषी रात्रिः । पौषमहः । अभेद इति प्रसज्यप्रतिषेधः तेनेहापि न भवति । पौषः अहोरात्रः । पौषः कालः इति अथेह कथमुस् न भवति अद्य दिवा पुष्यः अद्य रात्रौ पुष्यः इति पूर्वमष्टप्रहरात्मकस्य समुदायस्याभेद उसं विधाय पश्चाद्दिवारात्रिशब्दयोः प्रयोगः कृतः ।

खौ श्रवणाश्वत्थाभ्याम् ॥ ६ ॥

खौ भेदेपि उस् यथा स्यादित्यारम्भः । श्रवण अश्वत्थ इत्येताभ्यामुत्पन्नस्य यस्य उस् भवति खुविषये । श्रवणेन युक्ता श्रवणा रात्रिः । अश्वत्थेन युक्ता अश्वत्था रात्रिः । अश्वत्थो मुहूर्तः । फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य इति श्रवणाशब्दनिर्देशो ज्ञापक इह सूत्रे उसि युक्तवद्भावो न भवति । खाविति किम् । श्रावणी रात्रिः । आश्वत्थी रात्रिः ।

द्वन्द्वाच्छः ॥ ७ ॥

द्वंद्वाद्भासमर्थात् युक्तः काल इत्येस्मिन्नर्थे छो भवति भेदे चाभेदे च । अणोऽपवादः । राधानुराधीयं तिष्यपुनर्वसवीयमहः । अद्य तिष्यपुनर्वसीयम् । अत्र परत्वादुसो बाधकः ।

परिवृतो रथः ॥ ८ ॥

तेनेति वर्तते। तेन परिवृत इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति यः परिवृतो रथश्चेत् स भवति। वस्त्रेण परिवृतो रथो वास्त्रः। काम्बलः। चार्मणः। अनइति अणि टिखाभावः। रथ इति किम्। वस्त्रेण परिवृता शय्या। स इह कस्मान्न भवति छात्रैः परिवृतो रथ इत्यनभिधानात्। अथवा समन्ताद्वृतः परिवृत इत्याश्रयणात्। रथैकदेशस्त्वयमुत्पादयति न छात्रादिः इह कस्मादण् न भवति। पाण्डुकम्बलैः परिवृतो रथ इति अनभिधात्। कथं पाण्डुकम्बली रथ इति पाण्डुकम्बला अस्य संवृत्यापाठात् पचे कृते इन्द्रष्ठयः। ठस्याभिधानं नास्ति। तीयान्तात् स्वार्थे वा ईकण् वक्तव्यः। द्वैतीयिकम्। द्वितीयम्। तार्तीयिकम्। तृतीयम्। विद्याया अभिधाने नेष्यते द्वितीया विद्या। तृतीया विद्या। इह कथमण् भवति न विद्यते पूर्वः पतिर्यस्याः सा अपूर्वा कुमारी तादृशीं कुमारीमुपपन्नः कौमारः पतिरिति तत्र भव इत्यण् भविष्यति कुमार्यां भवः पतिः कौमारः पतिः। पुंयोगात् कौमारी भार्या इत्यपि सिद्धम्।

तत्रोद्धृतममत्रेभ्यः ॥ ९ ॥

भुक्तावशिष्टमुद्धृतमुच्यते इति केचित् तत्र नातिश्लिष्टं अन्यत्रापि प्रयोगात् उद्धृतं ब्राह्मणेन लब्धमिति तत्रेति ईप्समर्थात् अमत्रवाचिनो मृदः उद्धृतमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति। शरावेषु उद्धृत ओदनः शारावः। माल्लवः। अमत्रेभ्य इति किम्। पाणावुद्धृत ओदनः।

स्थण्डिलः ॥ १० ॥

स्थण्डिल इति निपात्यते स्थण्डिलशब्दादीबन्तात् शयितर्यभिधेये अण् निपात्यते समुदायेन व्रते गम्ये । स्थण्डिले शेते स्थाण्डिलो ब्रह्मचारी । व्रतादन्यत्र स्थण्डिले शेते देवदत्त इति ।

संस्कृतं भक्षाः ॥ ११ ॥

सतो गुणान्तराधानं संस्कारः । खरविशदमभ्यवहार्यं भक्षः तत्रेति ईप्समर्थात् संस्कृतमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति यत्तत् संस्कृतं भक्षाश्चेत् भवति । भ्राष्ट्रे संस्कृताः भ्राष्ट्राः । एवं कैलासपात्राः । भक्षाः इति किम् । फलके संस्कृतो मालागुणः ।

शूलोखाद्यः ॥ १२ ॥

शूल उखा इत्येताभ्यां ईप्समर्थाभ्यां संस्कृतं भक्षा इत्येतस्मिन्नर्थे यो भवति । अणोऽपवादः । शूले संस्कृतं शूल्यम् । उखायां संस्कृतमुख्यम् । उपमानात् सिद्धम् । पिठरे शूले इव संस्कृतं पिठरशूल्यम् । मयूरव्यंसकादित्वात् सविधिः ।

दध्नष्ठण् ॥ १३ ॥

दधिशब्दात् ईप्समर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थे ठण् भवति । दधनि संस्कृतं दाधिकम् । तत्र यद्दध्नि संस्कृतं तद्दध्ना संस्कृतमित्यपि भवति एवं तेन संस्कृतमिति वक्ष्यमाणेन ठणा सिद्धं नार्थोऽनेन दोषः । यद्दध्न्युत्पन्नं दधिकृतमेवोत्कर्षमपेक्षते तदिहोदाहरणं यस्य तु दध्ना लवणादिना च संस्कारः तस्य वक्ष्यमाणमुदाहरणम् ॥

वोदश्वितः ॥ १४ ॥

उदश्वित् शब्दात् ईप्समर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थे ठण् भवति। उदश्विति संस्कृत ओदनः औदश्वित्कः। औदश्वितः । अतोपि वावचनात् ज्ञायते तेन संस्कृतात्तत्र संस्कृतास्यार्थभेदः । अन्यथा ईवन्ताट्ठण् भान्तादण् इत्युभयं सिद्धं स्यात् ।

क्षीराड्ढण् ॥ १५ ॥

क्षीरशब्दात् ईप्समर्थात् संस्कृतं भक्षा इत्येतस्मिन्नर्थे ढण् भवति । अणोऽपवादः । क्षीरे संस्कृता क्षैरेयी यवागूः ।

सास्मिन् पौर्णमासीति रवौ ॥ १६ ॥

सेति वासमर्थात् अस्मिन् इति ईबर्थे यथाविहितं त्यो भवति यत्तद्वानिर्दिष्टं पौर्णमासी सा चेद्भवति । इतिकरणाद्यदि लोके विवक्षा समुदायेन चेत् संज्ञा गम्यते पूर्णचन्द्रमसा युक्तः कालः पौर्णमासी इदनेव ज्ञापकं अत्राण् भवतीति । माघी पौर्णमासी अस्मिन् मासे अर्द्धमासे संवत्सरे वा माघो मासः अर्द्धमास संवत्सरः एवं पौषः । रवाविति किम् । माघी पौर्णमासी अस्मिन् पञ्चदशरात्रे । इतिशब्दः किमर्थः। विद्यमानेपि लक्षणे लौकिकप्रयोगानुसारणार्थः । इह मा भूत माघी पौर्णमासी अस्मिन् द्विः भवति संवत्सरपर्वणि ।

अश्वत्थाग्रहायणीभ्यां ठञ् ॥ १७ ॥

सास्मिन् पौर्णमासीति वर्त्तते । अश्वत्था आग्रहायणी इत्येताभ्यां पौर्णमासीति वासमर्थाभ्यामस्मिन्निति ईबर्थे ठञ् भवत्यणोऽपवादः । अश्वत्थेन युक्तः कालः अश्वत्था पौर्णमासी अस्मिन्मासे अर्द्धमासे संवत्सरे आश्वत्थिकः । अग्रहायणेन युक्तः कालः आग्रहायणी आग्रहायणिकः ।

फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यो वा ॥ १८ ॥

फाल्गुन्यादिभ्यो वा ठञ् भवति सास्मिन् पौर्णमासीति वर्तते । फाल्गुनी पौर्णमासी अस्मिन् मासे संवत्सरे वा फाल्गुनिकः फाल्गुनः । एवं श्रावणिकः । श्रावणः । कार्तिकिकः । कार्तिकः । चैत्रिकः । चैत्रः ।

सास्य देवता ॥ १९ ॥

सेत्यत्र लिंगवचने अप्रधानभूते । सेति प्रथमासमर्थात् अस्येति षष्ठ्यर्थे यथाविहितं त्यो भवति यत्तद्वानिर्दिष्टं देवता चेत्सा भवति । अर्हन् देवता अस्य आर्हतः । भगवती देवता अस्य भागवतः । बार्हस्पत्यः । सेतिवर्तमाने पुनः साग्रहणं संज्ञाविषयनिवृत्त्यर्थम् तेन संज्ञायां वायं विधिः । देवतेति किम् । कन्या देवदत्तस्य ।

कस्येः ॥ २० ॥

कशब्देन प्रजापतिरभिधीयते । कस्य इकारोन्तादेशो भवत्यराच सास्य देवतेत्यस्मिन्विषये । को देवता अस्य कायं हविः । अणि पूर्वेण सिद्धे इत्वार्थं वचनम् । आरम्भसामर्थ्यात् यस्यङ्यां चेति खं न भवति ।

शुक्राद्घः ॥ २१ ॥

शुक्रशब्दात् घो भवत्यणोऽपवादः । सास्यदेवतेति वर्तते । शुक्रो देवतास्य शुक्रियः ।

अपोनप्त्रपान्नप्तृभ्याम् ॥२२॥

घ इति वर्तते अपोनप्तृ अपान्नप्तृ इत्येताभ्यां घो भवत्यणोऽपवादः । सास्यदेवतेति वर्तते । अपोनपाद्देवता अस्य अपोनप्त्रियः । अपान्नपाद्देवता अस्य अपान्नप्त्रियः । यम-

त्यसन्नियोगेन प्रकृत्योः अपोनप्तृ अपान्नप्तृभावो निपात्यते संप्रैषे अपोनपाते ब्रूहि अपान्नपाते ब्रूहि इति भवति ।

छः ॥ २३ ॥

अपोनप्तृ अपान्नप्तृ इत्येताभ्यां छश्च भवति सास्य देवतेत्यस्मिन् विषये अपोनप्त्रीयः। अपान्नप्त्रीयः। योगविभाग उत्तरार्थः। यौगीपुत्रादिभ्यश्छो वक्तव्यः। यौगीपुत्रीयः। तार्णविन्दवीयः। शतरुद्राद्घश्च। शतरुद्रियः। शतरुद्रीयः।

महेन्द्राद्घाणौ च ॥ २४ ॥

सास्य देवतेति वर्तते । महेन्द्रशब्दाद् घ अण् इत्येतौ भवतः छश्च । महेन्द्रो देवता अस्य महेन्द्रियः । माहेन्द्रः । माहेन्द्रीयः ।

सोमाट्यण् ॥ २५ ॥

सोमशब्दाट्ट्यण् भवति सास्य देवतेत्यस्मिन्विषये । अणोऽपवादः । सोमो देवता अस्य सौम्यः । स्त्रियां सौमी । हलोहृसोङ्यामिति यखम् ।

वाय्वृतुपित्रुषसो यः ॥ २६ ॥

वायु ऋतु पितृ उषस् इत्येतेभ्यो यो भवत्यणोऽपवादः । सास्य देवता इति वर्तते । वायव्यः। ऋतव्यः । पित्र्यः । रीदृत इति रीङादेशः । उषस्यः ।

द्यावापृथिवीशुनाशीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ २७ ॥

द्यावापृथिवी इत्येवमादिभ्यः छो भवति यश्च सास्य देवतेत्यस्मिन्विषये । द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयः । द्यावापृथिव्यः । शुनो वायुः शीर आदित्यः शुनश्च शीरश्च देवताद्वन्द्व इत्यानङ् शुनाशीरौ

देवते अस्य शुनासीरीयः । शुनासीर्यः । मरुत्वान् देवता अस्य मरुत्वतीयः । मरुत्वत्यः । अग्निश्च सोमश्च देवते अस्य अग्नीषोमीयः । अग्नीषोम्यः । सोमवरुणे ग्नेरीङ्गतीत्वम् । स्तुत्सोमौचाग्नेरिति षत्वम् । वास्तोष्पतीयः । वास्तोष्पत्यः । पुंल्लिङ्गत्वं ताया अनुप् षत्वं च निपातनात् । गृहमेधीयः । गृहमेध्यः ।

सर्वत्राग्निकलिभ्यां ठण् ॥ २८ ॥

सास्य देवतेति वर्तमाने सर्वत्रग्रहणं सर्वार्थसंग्रहार्थम् । अग्निकलिशब्दाभ्यां सर्वेष्वर्थेषु ठण् भवति प्राग्ढो । अग्निर्देवता अस्य अग्नौ भवः अग्नेरागतो आग्नेयः एवं कालेयः ।

कालेभ्यो भववत् ॥ २९ ॥

कालविशेषवाचिभ्यः भव इव त्यविधिः भवति । वत्करणं सर्वविशेषपरिग्रहार्थम् । येभ्यः कालविशेषवाचिभ्यो मृद्भ्यः भवे ये त्या विहिताः सास्य देवतेत्यस्मिन्विषये तेभ्य एव मृद्भ्यः त एव त्या अतिदिश्यन्ते । यथा मासे भवं मासिकं सांवत्सरिकं वासन्तं प्रावृषेण्यं कालाट्ठञ् असंध्यादृतुभ्योऽण् प्रावृषेण्यः । एते त्या भवन्ति तथा मासो देवता अस्य वसन्तो देवता अस्य प्रावृट् देवता अस्येति अत्रापि भवन्ति ।

महाराजप्रोष्ठपदाभ्यां ठण् ॥ ३० ॥

महाराजो वैश्रवणः । महाराज प्रोष्ठपदा इत्येताभ्यां ठण् भवति सास्य देवतेत्यस्मिन्विषये । महाराजो देवता अस्य माहाराजिकः । प्रोष्ठपदा देवता अस्य प्रौष्ठपदिकः । ठण्प्रकरणे तदस्मिन्वर्तते इति नवयज्ञादिभ्य उपसंख्यानम् । नवयज्ञोऽस्मिन् वर्तते नावयज्ञिकः । पाकयज्ञिकः । पूर्णमासादण् वक्तव्यः । पूर्णमासोऽस्यां वर्तते । पौर्णमासी तिथिः ।

पितृव्यमातुलमातामहपितामहाः ॥ ३१ ॥

पितृव्यादयः शब्दा निपात्यन्ते समर्थविभक्तिस्तयोनुबन्धस्त्वार्थ इति सर्वमिदं निपात्यते पितृमातृभ्यां तासमर्थाभ्यां भ्रातरि वाच्ये व्यड्लौ निपात्येते पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । ङित्वाट्टित्वम् । ताभ्यामेव पितरि डामहः । मातुः पिता मातामहः । स एव डामहो मातरि वाच्यायां टित्व । मातुर्माता मातामही । पितुर्माता पितामही । टित्वान्ङीविधिः ।

तस्य समूहः ॥ ३२ ॥

तस्येति तासमर्थात् समूह इत्येतस्मिन्नर्थे यथाविहित त्यो भवति चित्तवद्वृद्धं यस्य न चान्यत्र प्रतिपदं ग्रहणं तदिहोदाहरणम् । अचित्तवलक्षण वक्ष्यते । वृद्धाद्वुञ् । प्रतिपदमुक्तादिभ्योपि वुञादिः । काकानां समूहः काकम् । शौकम् । वाकम् । इह पञ्चानां पूलानां समूहः पञ्चपूला इति प्राप्नोति समूहार्थे ऽण् तस्य रस्रोवनपत्य इत्युप् परिमाणाद्द्वुपीतिनियमात् । असति ङीविधौ टापा भवितव्यम् । नायं दोषः समाहारलक्षण एवात्र रसः द्वुत्पत्ति र्न भवत्यनभिधानात् ।

भिक्षादेः ॥ ३३ ॥

तस्य समूह इति वर्तते । भिक्षा इत्येवमादिभ्यः यथाविहितं त्यो भवति पुनर्विधानं छणो बाधनार्थम् । भिक्षाणां समूह भैक्षम् । भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मन् सहस्र युवति पद्धति अथर्वन् दक्षिणा इह पाठसामर्थ्यात् गर्भिणी युवतिशब्दे न पुंवद्भावः ।

वृद्धोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ ३४ ॥

वृद्धादिभ्यो वुञ् भवति । तस्य समूह इति वर्तते । औपगवानां समूह औपगवकम् । कापटवकम् । औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । वृद्धाच्चेति वक्तव्यम् । वार्द्धकम् । प्रकृत्या अके राजन्यमनुष्ययुवान इति वचनात् वृत्यापत्यस्येति यखं न भवति । इह वृद्धग्रहणात् सिद्धे राजन्यमनुष्ययोः पृथग्ग्रहणं ज्ञापकमपत्याधिकारादन्यत्र वृद्धग्रहणेन लौकिकं गोत्रमपत्यमात्रमुच्यते नतु पौत्राद्यपत्यं वृद्धमिति तथाहि लोके किङ्गोत्रो भवान् इति पृष्टः वात्स्यायनोऽस्मीत्याह राजन्यमनुष्ययोस्तु जातिशब्दत्वात् लौकिकगोत्रग्रहणम् ।

केदाराद्यञ्च ॥ ३५ ॥

केदारशब्दाद्यञ् भवति वुञ् च तस्य समूह इत्यस्मिन्विषये ढणोपवादः । केदाराणां समूह कैदार्यम् । कैदारकम् । गणिकायाः यञ्च वक्तव्यः । गणिकानां समूहः गाणिक्यम् ।

ठञ् कवचिनश्च ॥ ३२॥

ठञ् भवति कवचिनश्च केदाराच्च तस्य समूह इत्यस्मिन्विषये । कवचिनां समूहः कावचिकम् । कैदारिकम् ।

ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ३६ ॥

ग्रामादिभ्यस्तल् भवति तस्य समूह इति वर्तते । ग्रामाणां समूह ग्रामता । जनता । बन्धुता । सहायता । गजाच्चेति वक्तव्यम् । गजता ।

चरणेभ्यो धर्मवत् ॥ ३७ ॥

चरणवाचिशब्देभ्यः समूह इत्येतस्मिन्नर्थे धर्म इव त्या भव-

न्ति । इदमेव ज्ञापकम् । अस्त्येनस्त्ररणाद्धर्माम्नाययोरितिवृद्धचरणाञ्ञिदित्यारभ्य चरणाद्धर्मे त्यविधिर्वक्ष्यते स इहातिदिश्यते । बहुकरणं सर्वविशेषपरिग्रहार्थम् । यथा कठानां धर्मः काठकम् । कालापकम् । मौदकम् । पैप्पलादकम् । आर्वाभकम् । वाजनेयकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणः । वृद्धचरणाञ्ञिदिति वुञ् । छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य इति ञ्यः । अथर्वण इति च निपात्यते आथर्वणिकानां धर्म इत्यत्र वाक्ये तथा कठानां समूहः काठकमित्येवमादि योज्यम् ।

अचित्तहस्तिधेनोष्ठण् ॥ ३८ ॥

अचित्तमचेतनम् । अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठण् भवति तस्य समूह इत्यस्मिन्विषये । अपूपानां समूहः आपूपिकम् । शष्कुलीनां समूहः शाष्कुलिकम् । हास्तिकम् । धैनुकम् । पश्वा णम् वक्तव्यः । पशूनां स्त्रीणां समूहः पार्श्वम् । भित्वात्पदसंज्ञाया भलक्षणयोरत्वं न भवति । खण्डिकादिभ्योञ् वक्तव्य इतिचेत् न वक्तव्यः । नास्ति विशेषः । अभिधानमत्यर्थं वा खण्डिकादिषु येऽचित्तवतः तेभ्यः औत्सर्गिकोऽण् सिद्धः येत्वचित्ताः ते भिक्षादिषु पठनीयाः । खण्डिकः अहन् वहवक्षुद्रकमालवाः अद्रिसंज्ञाताः क्षत्रिया इत्यर्थः तेषां समूह वृद्धलक्षणो वुञ् प्राप्तः । ननु च यथा राष्ट्रावध्योरित्यत्र राष्ट्राद्दुच्यमानो वुञ् न राष्ट्रसमुदायाद्भवति काशिकौशलेषु भवा काशिकोशलीयाः इति छ एव भवति तथेह वृद्धादुच्यमानस्त्यः कथं वृद्धसमुदायादिति एवं तर्हि तदन्तविधिना भविष्यति इदमेव ज्ञापकं सामूहिके त्ये तदन्तविधिर्भवति क्षौद्र-

कमालवी सेना क्षौद्रकमालवकमन्यत् । भिक्षुक शुक उलूक अयं यजन्तः बहुत्वे अणं प्रयोजयति । श्वनुयुग वरत्र हंस इति खंडिकादिसामूहिके तदंतविधिर्ज्ञापितः । तेन औपगवकापटवानां समूहः औपगवकापटवकम् । ब्राह्मणराजन्यकम् । दम्भहस्तिनां समूहः दाम्भहस्तिकम् । गौधेनुकम् । गोधेनुकम् । धेनोर्नञ्पूर्वाया नेष्यते अधेनूनां समूहः आधेनवम् ।

केशाश्वाभ्यां यञ्छौ वा ॥ ३३॥

केश अश्व इत्येताभ्यां यथासंख्यं यञ्छ इत्येतौ त्यौ वा भवतः । केशानां समूहः कैश्यम् । कैशिकम् । अश्वानां समूहः अश्वीयम् । आश्वम् ।

पाशादेर्यः ॥ ३४ ॥

पाश इत्येवमादिभ्यः यो भवति तस्य समूह इति वर्तते । पाशानां समूहः पाश्या । तृण तृण्या । धूम्या । वात वात्या । लिङ्गं लोकतो ज्ञेयम् । पाश तृण धूम वात अंगार पालवाल पिटक पिटाक शकल हलानल वन पृम्व ।

ब्राह्मणमाणववाडवात् ॥ ३५ ॥

य इति वर्तते । ब्राह्मण माणव वाडव इत्येतेभ्यो यो भवति तस्य समूह इत्यस्मिन्विषये । ब्राह्मणानां समूहः ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ।

गोखलरथात् ॥ ३६ ॥

गो खल रथ इत्येतेभ्यः तान्तेभ्यः यो भवति समूहे । गवां समूहः गव्या । खल्या । रथ्या । योगविभाग उत्तरार्थः ।

त्रेनूकट्यः ॥ ३७ ॥

गो खल रथ इत्येतेभ्यः यथासंख्यं त्र इन् कट्य इत्येते

प्रत्यया भवन्ति । तस्य समूह इति वर्तते । गवां समूहः गोत्रा । खलिनी । रथकट्या । खलादिभ्यः इन् वक्तव्यः । डाकिनी । कुटुम्बिनी । लोकतो लिङ्गव्यवस्था ।

राष्ट्रे ॥ ४५ ॥

समूह इति निवृत्तम् । अर्थान्तरोपादानात् तस्येति वर्तते । राष्ट्रं जनपदः तस्येति तासमर्थात राष्ट्रेऽर्थे यथाविहित त्यो भवति । शिवानां राष्ट्रं शैवम् । जनपदापेक्षया पुंलिङ्गता प्रयोक्तव्या । शैवः । आयुष्टः । आभिसारः । राष्ट्राभिधाने बहुत्वे उस्वक्तव्यः । अङ्गानां राष्ट्रं अङ्गाः । वङ्गाः । सुह्माः । गान्धार्यादिभ्यो वेति वक्तव्यम् । गान्धारीणां राष्ट्रं गान्धारयः। वासातः । वसातयः । शैवः । शिवाः। राजन्यादिभ्यो वा वुञः उस्वक्तव्यः । राजन्यानां राष्ट्रं राजन्याः । राजन्यकः । दैवयातकः । दैवयातवका । विल्ववनादिभ्यो नित्यमुस् न भवतीति वक्तव्यम् । बैल्ववनकः । आंवरीषपुत्रकः । आत्मकामेयकः । नेदं बहु वक्तव्यं राष्ट्रविवक्षायाः निवासविवक्षायाश्च प्रतिनियमात्सिद्धम् बहुत्वविषये जनपदस्य निवासविवक्षयैव तत्र जनपद् उसिति उस् भवति गांधार्यादीनां राजन्यादीनां च उभयी विवक्षा बिल्वधनादीनां राष्ट्रविवक्षैव ।

राजन्यादेर्वुञ् ॥ ४६ ॥

राजन्य इत्येवमादिभ्यः तासमर्थेभ्यः वुञ् भवति राष्ट्रे । राजन्यकः । राजन्य आव्रति बाटसक शालङ्कायन दैवयातव जालन्धरायण । कौन्तल आत्मकामेय अम्बरीषपुत्र वसाति बिल्वधन मैलूषज उदुंवर वैतल आर्जुनायन संप्रियदाक्षि ऊर्णनाभ आकृतिगणश्चायं मालव त्रिगर्त बिराटादीनां ग्रहणम् ।

भौरिक्याद्यैषुकार्यादिभ्यो विधभक्तौ ॥ ४७ ॥

आदिशब्दः प्रत्येकमभिसम्बध्यते भौरिक्यादिभ्यः ऐषुकार्यादिभ्यश्च यथासंख्यं विध भक्त इत्येतौ त्यौ भवत राष्ट्रेऽर्थे । भौरिकीणां राष्ट्रं भौरिकिविधः । भौलिकिविधः । भौरिकि भौलिकि चौपयत चैटयत सैकयत काण्ये वाणिजक वालिज्यक शैवपत् । ऐषुकारिभक्ता सारसायनभक्ता । ऐषुकारि सारसायन चान्द्रायण द्व्याक्षायण त्र्याक्षायण औलायन । खाडायन सौवीर दासमित्रायण शौद्रायण तपंद शौण्ड । विश्वधेनव वैश्वधेनव चतुरङ्कदेव सापिण्ड ।

तदस्मिन्युद्धे योद्धृप्रयोजनात् ॥ ४८ ॥

योद्धारश्च प्रयोजनं च योद्धृप्रयोजनं तदिति वाक्सामर्थ्यात् अस्मिन्निति इदमर्थे यथाविहितं त्यो भवति यत्तद्वाग्निर्दिष्टं योद्धारश्चेत तद्भवन्ति प्रयोजनं चेत् तद्भवति यत्तदस्मिन्निति निर्दिष्टं युद्धं चेद्भवति । विद्याधराः योद्धारः अस्मिन् युद्धे वैद्याधरं युद्धम् । कौरवम् । भारतम् । प्रयोजनात् खल्वपि सुलोचना प्रयोजनमस्मिन् युद्धे सौलोचनम् । स्वायंप्रभम् । सौतारम् । संग्रामे त्वभिधेये पुंलिङ्गता वैद्याधरः संग्रामः । सौलोचनः संग्रामः । युद्ध इति किम् । सुभद्रा प्रयोजनमस्मिन्वैरे । योद्धृप्रयोजनादिति किम् । रथा वाहनमस्मिन् युद्धे ।

प्रहरणमिति क्रीडायाणः ॥ ४९ ॥

तदस्मिन्निति वर्तते तदिति वाक्सामर्थ्यात् अस्मिन्निति इदमर्थे णो भवति यत्तद्वाक्सामर्थ्यम् प्रहरणं चेत्तद्भवति यत्तदस्मिन्निति निर्दिष्टं क्रीडा सा चेद्भवति इतिकरणः ततश्चेद्विवक्षा अद्रोहेण यत्र घातो सा क्रीडा । दण्डः

प्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा । पादा । प्रहरणमिति किम् । गन्धोदकसेचनमस्यां क्रीडायाम् । क्रीडायामिति किम् । असिः प्रहरणमस्मिन् युद्धे ।

श्यैनंपातातैलंपाता ॥ ५० ॥

श्यैनंपाता तैलंपाता इत्येतौ शब्दौ निपात्येते । श्येनानामिव पातः श्येनपातः अस्यां क्रीडायां वर्तते श्यैनंपाता । तिलानामिव पातः तिलपातः अस्यां क्रीडायां तैलंपाता । अस्मिन्नर्थे णो निपात्यते पूर्वपदस्य च मुमागमः । कथं दण्डपातः क्रिया अस्यां तिथौ वर्तते दाण्डपाता तिथिः । मुशलपातोऽस्यां वर्तते मौशलपाता भूमिः । पूर्वसूत्रे इतिकरणादन्यत्रापि णो भवति ।

तद्वेत्त्यधीते ॥ ५१ ॥

तदिति द्वयसमर्थात् वेत्ति अधीते इत्येतयोरर्थयोर्यथाविहितं त्यो भवति तदिति प्रत्येकं सम्बध्यते तद्वेत्ति तदधीते इति यथा तेन दीव्यतिखनतिजयतिजितमित्यत्र तेनेति मुहूर्तं वेत्ति मौहूर्तः । औत्पातः । व्याकरणमधीते वैयाकरणः सैद्धान्तः ।

क्रतूक्थादिसूत्रान्ताट्ठण् ॥ ५२ ॥

सयूपा यज्ञाः क्रतवः । क्रतुविशेषवाचिभ्यो मृद्भ्यः उक्थादिभ्यः सूत्रान्ताच्च ठण् भवति तद्वेत्त्यधीते इति वर्तते अग्निष्टोमं वेत्त्यधीते वा आग्निष्टोमिकः । राजसूयिकः । वाजपेयिकः । उक्थादिभ्यः उक्थशब्दः केषुचिदेव सामसु रूढः स

च औक्थिक्ये वर्तमानः ठयविधिं लभते उक्थमधीते औक्थिकः । औक्थिक्यमधीतेइत्यर्थः । औक्थिक्यशब्दात्तु न ठयविधिर्भवत्यनभिधानात् । एष यज्ञशब्दोपि याज्ञिक्ये ठयविधिं लभते याज्ञिकः । लोकायतमधीते लोकायतिकः । सूत्रांतात् वार्त्तिसूत्रिकः । सांग्रहसूत्रिकः । सूत्रांतादकल्पादेरिष्यते तेन काल्पसूत्र इत्यणेव भवति । सूत्रांतग्रहणं उक्थादेः प्रपंचः । उक्थ लोकायत न्याय न्यास पुनरुक्त संज्ञा चर्चा क्रमेतर श्लक्ष्ण संहिता पद क्रम संघात वृत्ति संग्रह गण गुण आयुर्वेद वसंत सहचरिते अध्ययने वसंतात् वर्षा शरद् व्यस्तसमस्तात् शिशिर हेमन्त प्रथम गुण ऋतुगुण प्रथमगण अगुगण इति केचित् अथर्वन् विद्यालक्षणकल्पसूत्रांतात् अकल्पादेः । वायसविद्यिकः । सार्पविद्यकः । हास्तिलक्षणिकः । मातृकल्पिकः । पैत्रिकल्पिकः । वार्त्तिसूत्रिकः अकल्पादेरिति किम् । काल्पसूत्रः । विद्यामाननक्षत्र धर्मत्रिपूर्वात् इह विद्यान्तात्ठणुक्तः तस्यायं प्रतिषेधः । अङ्ग विद्यामधीते आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रैविद्यः । अवयवा विद्या इति पक्षे अयं प्रतिषेधः रसे तु रस्रोवनपत्यइत्युना भवितव्यं तत्र नास्ति विशेषः । आख्यानाख्यायिकेतिहासपुराणेभ्यश्च । आख्यानाख्यायिकयोरर्थग्रहणं इतिहासपुराणयोः स्वरूपग्रहणम् आख्यानात् यावक्रीतिकः । आधिभारिकः । आख्यायिकायाः वासवदत्तिकः । ऐतिहासिकः । पौराणिकः । सर्वसादेरसाच्चोप्सर्वादेःरसाच्चोप् भवति सर्ववेदः । सर्वतंत्रः । सादेः सवार्त्तिकः । ससंग्रहः । सर्वत्र टणउप् रसात् पंचकल्पः । त्रिलक्षणः । त्रिसूत्रः । विद्यालक्षण-

कल्पसूत्रात्ठुणक्तः । पदोत्तरपदादिकः । पूर्वपदिकः । उत्तरपदिकः । शतषष्टिभ्यां पथष्ठिकः । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी । अनुशूलक्ष्यलक्षणेभ्यश्च ठण् । अनुसूनाम ग्रंथः । अनुसूमधीते आनुसुकः । लाक्षिकः । लाक्षणिकः । द्विपद ज्योतिष अनुपद अनुकल्प इतिकरणं प्रयोगार्थं वर्तते ततोऽयं विभागो लभ्यते ।

क्रमादेर्वुन् ॥ ५३ ॥

तद्वेत्त्यधीते इति वर्तते । क्रम इत्येवमादिभ्यो वुन् भवति क्रमं वेत्त्यधीते वा क्रमकः । क्रम पद शिक्षा मीमांसा सामन् । अनुब्राह्मणादिन्वक्तव्यः । ब्राह्मणसदृशो ग्रन्थो अनुब्राह्मणं तदधीते अनुब्राह्मणी । अनुब्राह्मणिनौ । अनुब्राह्मणिनः । मत्वर्थीयेन सिद्धेऽपि अणबाधनार्थमिदं वक्तव्यम् ।

उप्प्रोक्तात् ॥ ५४ ॥

प्रोक्तेऽर्थे विहितः प्रोक्तः प्रोक्तप्रत्ययान्तात अध्येतृवेदित्रोरुत्पन्नस्य त्यस्योब् भवति । गोतमेन प्रोक्तं गौतमं तद्वेत्त्यधीते वा गौतमः । भद्रबाहुना प्रोक्तं भाद्रबाहवं तद्वेत्त्याधीते वा भाद्रबाहवः । परस्याण उपि कृते योऽवस्थितः । प्रोक्तार्थविषयो अण् तस्य न्यत्कात् अनीच इत्यधिकरात टिड्ढाणञिति ङीविधिर्न भवति अतश्चापि गौतमा । भाद्रबाहवा स्त्री ।

सूत्रात्कोङः ॥ ५५ ॥

सूत्रवाचिनः ककारोङः अध्येतृवेदित्रोरुत्पन्नस्य त्यस्योऽभवति अप्रोक्तार्थोऽयमारम्भः । पञ्चाध्यायाः परिमाणमस्य

पंचकं सूत्रम् । एवमष्टकं द्वादशकं पञ्चका जैनेन्द्राः । अष्टकाः पाणिनीयाः द्वादशका आर्हताः । संख्याप्रकृतेरिति वक्तव्यम् । इह मा भूत् तत्वार्थवार्तिकमधिते तात्वार्थवार्त्तिकः । कलापकमधीयते कालापकः ।

## छन्दोब्राह्मणानि चात्रैव ॥ ५६ ॥

प्रोक्तग्रहणमनुवर्तमानं छन्दोब्राह्मणानां विशेषणम् । अत्रेत्यनेन अध्येतृवेदितृत्यविषयो गृह्यते छन्दोवाचीनि ब्राह्मणवाचीनि च प्रोक्तत्यान्तानि अत्रैव अध्येतृवेदितृत्यविषये वर्तन्ते अध्येतृवेदितृत्यविषया वृत्तिरेव यथा स्यादित्यर्थः उभयावधारणं चेदमेवकारोपादानात् लभ्यते अन्यथा आरम्भसामर्थ्यात् विषयावधारणे सिद्धे एवकारोऽनर्थकः स्यात् प्रोक्तत्यान्तस्यात्रैव वृत्तिर्नान्यत्र तथा वृत्तिरेव न केवलावस्थानमित्युभयथा नियमः अन्यत्रानियमात् क्वचित् स्वातंत्र्यं भवति अर्हता प्रोक्तं शास्त्रं क्वचिदुपान्यतरयोगः आर्हतं महत्तु विहितमिति क्वचिद्वाक्यमार्हतमधीते क्वचिद्वृत्तिः आर्हत इति इदं पुनर्नियमात् युगपदेव विग्रहः कठेन प्रोक्तं छंदोधीयते कठाः सोनकादिषु वैशंपायनांतेवासिभ्य इतिवचनात् णिन् तत्रैव कठचरकाद्बिति ते स्योप् ततः परस्याण् उप्प्रोक्तादित्युप् । मोदेन प्रोक्तमधीत्ते मोदाः पैप्पलादाः कलापिनोणित्यत्र अण्ग्रहणसामर्थ्यात् अन्यत्राप्यण् आर्वभिनः वैशंपायनान्तेवासिभ्यः इति णिन् वाजसनेयिनः । सौनकादित्वात णिन् ब्राह्मणानि स्वल्वपि ताण्डिना प्रोक्तं ब्राह्मणमधीयते तांडिनः । सोनकादिषु पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति णिन् । भल्लवेन प्रोक्तमधीते पूर्ववत् णिन् भाल्लविनः । एवं साट्यायनिनः । ऐतरेयिणः । छंदोग्रहणेन सिद्धे पृथक् ब्राह्मणग्रहणं किम् । पुराणप्रोक्तत्वविशिष्टब्राह्मणप-

रिग्रहार्थम् । इह मा भूत् याज्ञवल्केन प्रोक्तानि ब्राह्मणानि शकलादिभ्यो वृद्धः इत्यण् परत्वम् "सुलभेन प्रोक्तानि सौलभानि" कलापिनोणित्यन्यत्राप्यण् याज्ञवल्कादयो अवरकाला इति व्यवहारः । चकारः किमर्थः ब्राह्मणसदृशब्राह्मणानां समुच्चयार्थः । काश्यपेन प्रोक्तं कल्पं अधीयते काश्यपिनः कौशिकेन प्रोक्तं कल्पमधीयते कौशिकिनः । सौनकादिषु काश्यपकौशिकाभ्यामिति णिन् गुणभूतछन्दसां च समुच्चयार्थं पाराशर्येण प्रोक्तं सूत्रमधीयते पराशरिणो भिक्षवः शिलालिना प्रोक्तमधीयते सैलालिनो नटाः ॥ सौनकादिषु परासर्यशिलालिभ्यां भिक्षुनटसूत्रयोरिति णिन् । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनः । कृशाश्वेन प्रोक्तमधीयते कृशाश्विनः । सौनकादिष्वेव कर्मन्द्र कृशाश्वाभ्यामिनिति भिक्षुनटसूत्रयोरिति वर्तते ।

तदस्मिन्नस्तीति देशः रवौ ॥ ५७ ॥

तदिति वासमर्थात् अस्मिन्निति ईवर्थे यथाविहितं त्यो भवति यत्तद्वासमर्थं अस्ति चेत तद्भवति यत्तदस्मिन्निति निर्दिष्टं देशश्चेत्तद् भवति समुदायेन रवुविषये इति करणात् भूमादिविषये विवक्षा औदुम्बरः । बाल्वजः । पार्वतः । मत्वर्थोयोऽनेन बाध्यते ।

तेन निर्वृत्तः ॥ ५८ ॥

देशःखावति वर्तते । तेनेति भासमर्थात् निर्वृत्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति देशः खौ । ककन्देन निर्वृत्तकाकंदी । मकन्देन निर्वृत्ता माकंदी । कुशाम्बेन निर्वृत्ता कौशाम्बीसहस्रेण निर्वृत्ता । साहस्री । परिखा । खावित्येव वनेन निर्वृत्तम् इह यदा अकर्मका अपि धवः सगयः सकर्मका भवंतीति

कर्मणि निर्वृत्तशब्दो ठ्युत्पाद्यते तदा तेनेति कर्तरि करणे वा भा यदात्वकर्म्मकविवक्षया कर्तरि निर्वृत्तशब्दः तदा हेतौ भा ।

तस्य निवासादूरभवौ ॥ ५९ ॥

देशःखाविति वर्तते तस्येति तासमर्थात् निवास अदूर-भवइत्येतयोरर्थयोर्यथा विहितं तयो भवति देशनाम्नि गम्यमाने निवसंत्यस्मिन्निति निवासः काल इत्यधिकरणे घञ् । भवतीति भवः पचाद्यच् अदूरे भवः निपातनात्सविधिः । वसतेर्निवासः वासातम् औष्ट्रम् । शलाकायानिवासः शालाकम् । वाराणस्या अदूरभवा वाराणसी । विदिशाया अदूरभवं वैदिशम् । व्रीही-मत्या अदूरभवं व्रैहिमतं नगरम् ।

वुञ्छणकंठेलसेन्नढञयफफिफजिञ्कराठणोऽरीह-णकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाश बलपक्ष-कर्णसुतंगमवराहकुमुदादिभ्यः ॥ ६० ॥

वुञादयः षोडश त्याः यथासंख्यं अरीहणादिभ्यः षो-डशेभ्यो गणेभ्यो भवन्ति यथा संभवं प्रागुक्तेषु चतुर्थेषु । अरी-हणादिभ्यः वुञ् । अरीहणेन निर्वृत्तं आरीहणकम् । अरी-हण द्रुघण द्रुवण खदिर भगल उलुंद सांपरायन क्रौष्टायण चैत्रायण त्रैगर्तायण रायस्फोष विपथ विसाय उद्दण्ड उदंचन शालायन खाण्डायन खंडवीरण काशकृत्स्न जांववत शिंशपा किरण रैवत तैल्व वैमतायन सौमायन सांडि-ल्यायन सुयज्ञ विपाश वायम । कृशाश्वादिभ्यश्छण भवति । कृशाश्वेन निर्वृत्तं काशाश्वीयम् । कृशाश्वारिष्ट । अरिष्ट वेश्मन् वेष्यविशाल रोमक लोमक वर्वर शवल रोमश वर्वर सूकर पूतर सदृश सुख धूम अजिर विनत

प्रग्राहेण चरति । तुलाप्रग्रहेण चरति । तुलासूत्रं गृहीत्वा वणिक् चेष्टते इत्यर्थः । वणिजामिति किम् । प्रग्रहो देवदत्तस्य ॥

रश्मौ ॥ ४८ ॥

प्र इति वेति च वर्तते । इह रश्मिशब्देन अश्वादिसंयमनरज्जुरेव गृह्यते । प्रशब्दे वाचि ग्रहेर्वा घञ् भवति समुदायेन रश्मावभिधेयायाम् । प्रगृह्यते इति प्रग्राहः ॥

आच्छादने वृञः ॥ ५० ॥

वेति वर्तते प्र इति च । प्रपूर्वाद्वृणोतेर्वा घञ् भवति आच्छादनविशेषे वाच्ये । प्रवृणोति तं प्रावारः । प्रवरः । आच्छादन इति किम् प्रवरः ॥

परौ भुवोऽवज्ञाने ॥ ५१ ॥

वेति वर्तते । अवज्ञानमवक्षेपः । परिपूर्वाद्भू इत्येतस्माद्वा घञ् भवति अवज्ञाने वाच्ये। परिभावः । परिभवः । अवज्ञान इति किम् । सर्वतो भवः परिभवः ॥

एवृग्रहवृदृगमोऽच् ॥ ५२ ॥

भावे अकर्तरीत्येवानुवर्तते । इवर्णान्तात् उवर्णान्तात् ऋवर्णान्तात् ग्रह वृ दृ गमि इत्येतेभ्यः वाजित्ययं त्यो भवति । घञोऽपवादोऽयम् । चयः । जयः । यवः । रवः । लवः । करः । गरः । शरः । ग्रहः । वरः । आदरः । गमः । चकारः व्योघञचोरित्यत्र विशेषणार्थः । अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् । भयम् । वर्षम् । रणिवशिभ्यामज्वक्तव्यः । रणः । वशः । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थं कर्तव्यम् । प्रतिष्ठतेऽस्मिन् प्रस्थः । प्रस्नात्यस्मिन् प्रस्नः । प्रपिबन्त्यस्यां प्रपा । आविध्यन्त्यनेन आविधम् ।

हन्यते तेनास्मिन्वा विघ्नः । आयुध्यन्त्यनेनेति आयुधम् ॥

गावदः ॥ ५३ ॥

गिपूर्वाद् अदेरच् भवति । प्रादनं प्रघसः । विघसः । संघसः । घसलुङ्घञ्सनश्विति अदेर्घस्लादेशः । गाविति किम् । घासः । अस्मिन् प्रकरणे यत्रैषा गिर्निर्दिश्यते तत्र गिलक्षणः प्रादिलक्षणो वा सविधिः ॥

नौ णश्च ॥ ५४ ॥

निपूर्वाददेर्णो भवति अच्च । न्यादः । निघसः ॥

पणः परिमाणे ॥ ५५ ॥

पणेर्घञि णे वा नास्ति विशेषः इत्यारंभसामर्थ्यादच एवानुवृत्तिः । पणः परिमाणे गम्यमाने अज् भवति । पण्यत इति पणः मूलकपणः । शाकपणः ।

पशुष्वजः समुदोः ॥ ५६ ॥

सम उद् इत्येतयोर्वाचोरजेर्द्वोरज् भवति पशुविषये । समजः पशूनां समुदाय इत्यर्थः । उदजः । पशुनामुच्चालनमित्यर्थः । पशुष्विति किम् । समाजः साधूनाम् । उदाजः शकुनीनाम् । ष्विति ते । निट् कुत्वं विधेयते अजेस्तु वीभावेन भवितव्यमिति असत्वाद्विशेषणां नास्तीति कुत्वं न भवति ।

ग्लहोऽक्षे ॥ ५७ ॥

ग्लह ग्रहणे इत्यस्मादज् भवति अक्षविषये । अक्षेषु ग्लहः । अक्ष इति किम् । ग्लाहः ।

प्रजने सुः ॥ ५८ ॥

प्रजनो गर्भाधानम् । प्रजनविषये सु इत्येतस्मादज् भवति गवामुपसरः । गर्भाधानाय स्त्रीगवीषु वृषाणामुपसरण-

मित्यर्थः । एवं पशूनामुपसरः । प्रजन इति किम् । उपसारो भृत्यै राज्ञाम् ।

ह्वो जिश्च न्यभ्युपविषु ॥ ५९ ॥

नि अभि उप वि इत्येतेषु वाऽसु ह्वयतेर्जिर्भवत्यच्च । निहवः । अभिहवः । उपहवः । विहवः । हुरादेशो वक्तव्य इति चेत् इह निजोहवः इति गुङ्वंतस्य स चस्य प्रसज्येत । एतेष्विति किम् । संह्वायः ॥

आङ्याजौ ॥ ६० ॥

आजिः संग्रामः । आङ्पूर्वात् ह्वयते आजावभिधेयायां जिर्भवत्यच्च । आह्वयन्तेऽस्मिन्निति आहवः । आजाविति किम् । आह्वायः ॥

निपानमाहावः ॥ ६१ ॥

निपिबन्त्यस्मिन्निति निपानं जलस्थानम् । आहाव इति निपात्यते निपातनं चेद्भवति । आङ्पूर्वस्य ह्वयतेरधिकरणे घञ् निपात्यते । आहूयन्तेऽस्मिन्निति आहावः शकुनीनाम् निपानमिति किम् । आह्वः ।

भावेऽगौ ॥ ६२ ॥

अगिपूर्वस्य ह्वयतेर्भावे जिर्भवत्यच्च । ह्वानं हवः । अगाविति किम् । आह्वायो वर्तते । कर्तरीत्यस्यानुप्रवेशो मा भूदिति पुनर्भावग्रहणम् ।

हनश्च वधः ॥ ६३ ॥

हन्तेरगिपूर्वस्य भावे वधादेशो भवत्यच्च । हननं वधः । चकारो घञ्समुच्चयार्थः । घातो वर्तते ।

व्यधमदजपोऽगौ ॥ ६४ ॥

अगाविति वर्तमाने पुनरगिग्रहणं भावनिवृत्यर्थं । तेन भावे अकर्तरीति द्वयं संबध्यते । अगिपूर्वेभ्यः व्यध मद् जप, इत्येतेभ्यः अज् भवति। व्यधः । मदः । जपः । अगाविति किम् । प्रव्याधः । उन्मादः । उपजापः ।

स्वनहसोर्वा ॥ ६५ ॥

अगाविति वर्तते । अगिपूर्वाभ्यां स्वन हस इत्येताभ्यामज् भवति वा । स्वनः । स्वानः । हासः । हसः । अगावित्येव । प्रस्वानः । प्रहासः ।

यमः सन्निव्युपे च ॥ ६६ ॥

यमेर्धोः सम् नि वि उप इत्येतेषु वाक्षु अगौ च अज् भवति । वेति वर्तते । संयमः । संयामः । नियमः । नियामः । वियमः । वियामः । उपयमः । उपयामः । अगौ यमः । यामः ।

नौ गदनदपठस्वनः ॥ ६७ ॥

वेति वर्तते । निपूर्वेभ्यः गद् नद् पठ स्वन इत्येतेभ्यो वा अज् भवति । निगदः । निगादः । निनादः । निनदः । निपठः । निपाठः । निस्वनः । निस्वानः ।

क्वणो वीणायां च ॥ ६८ ॥

नौ वा अगाविति त्रयं वर्तते । क्वणेर्धोः निपूर्वादगिपूर्वाच्च अवीणायां वीणायां च विषये अज् भवति । निक्वणः । निक्वाणः । अगौ क्वणः । क्वाणः । वीणाग्रहणं गावपि प्रापणार्थम् । कल्याण प्रक्वणा वीणा । कल्याणप्रक्वाणा वीणा । एतेष्विति किम् । अतिक्वाणः ॥

घनान्तर्घणप्रघणप्रघाणोद्घनापघनायोघनविघनद्रुघ-

**गस्तम्बघ्नस्तम्बघनपरिघोपघ्नसंघोद्घ-**

**निघप्रमदसम्मदाः ॥ ९८ ॥**

घनादयः शब्दा निपात्यन्ते । हन्तेरच् घनभावश्च मूर्ताविभिधेयायां निपात्यते । मूर्तिः काठिन्यम् । अभ्रघनः । दधिघनः । कर्म्मणि घनं दधीति भवति । अन्तःशब्दपूर्वस्य हन्तेरधिकरणे घनभावोऽच्च निपात्यते देशाभिधाने । अन्तर्हन्यतेऽस्मिन्निति अन्तर्घणो वाहीकेषु देशविशेषः । केचिन्नकारं पठन्ति अन्तर्घातोऽन्यः । प्रपूर्वस्य हन्तेः अचि घञि च घनभावो निपात्यते अगारैकदेशेऽभिधेये । प्रघणः । प्रघाणः । गृहद्वारदेश इत्यर्थः । प्रघातोऽन्यः । उत्पूर्वस्य हन्तेरधिकरणे घनभावोऽच्च निपात्यते अत्याधानं चेद्भवति । अत्याधीयतेऽस्मिन्नित्याधानम् । यत्र काष्ठानि लोहानि चाहन्यन्ते तदुच्यते । ऊर्ध्वं हन्यते ऽस्मिन्नुद्घनः । उद्घातोऽन्यः । अपघन इति निपात्यते अङ्गं चेद्भवति । अपघातोऽन्यः । अयोघनः । द्रुघण स्तम्बघ्नः स्तम्बघनः परिघ इत्येते करणे कारके अजन्ता निपात्यन्ते द्रुघणे केचिन्नकारं पठन्ति । स्तम्बघ्ने कमात्र निपात्यते । परिपूर्वस्य हन्तेर्घभावश्च निपात्यः । उपपूर्वात् हन्तेराश्रये ऽभिधेये को निपात्यते गुरूपघ्नः पर्वतोपघ्नः । उपघातोऽन्यः । सम्पूर्वस्य हन्तेर्घभावोऽच्च निपात्यते गणश्चेद्भवति गणः प्राणिसमुदाय एव पशूनां संघः । अन्यत्र संघातः । उत्पूर्वस्य हन्तेर्घादेशो ऽच्च निपात्यते प्रशंसायाम् । उद्घो मनुष्यः । उद्घातोऽन्यः । निघ इति निपात्यते निर्विमितेर्थे समतादारोहपरिणाहाभ्यां मितन्तुल्यन्निमितं निघाः शालयः । निघातोऽन्यः । प्रमदसंमदौ हर्षेऽभिधेये । अन्यत्र प्रमादः सम्मदः ।

डि्वतः त्त्रिः ॥ ७० ॥

डुशब्देतो धेः त्त्रित्यो भवति । भावे अकर्तरीति वर्तते । डुपचष् पक्त्रिमम् । गावादिमः त्रेरिति इमः । त्र्यन्तस्य केवलस्य प्रयोगो नास्तीत्यस्वपदेशार्थकथनं पाकेन निर्वृत्तमिति । एवं टुवप् वप्त्रिमम् । टुयाच याचित्रिमम् ॥

ट्वितोऽथुः ॥ ७१ ॥

टुशब्देतो धोरथुस्त्यो भवति । टुवेपृ वेपथुः । टुओश्वि श्वयथुः । टुक्षु । क्षवथुः ॥

यजयाचयतविच्छप्रच्छरक्षस्वपो नङ् ॥ ७२ ॥

यजादिभ्यो नङ् भवति भावे अकर्तरीति वर्तते । यज्ञः । स्तोश्चुनाश्चुरिति चुत्वम् । याच्ञा लिंगं लोकवशात् । यत्नः । विश्नः । नङो ङित्करणमेप्प्रतिषेधार्थं ज्ञापकं प्रागेव तुकः छोशूठ चेति शत्वम् । प्रश्नः । प्रश्नेचांतर्युगइति निर्देशाज्ञिर्न भवति । रक्ष्णः । ष्टुनाष्टुरिति टुत्वम् । स्वप्नः ॥

गौ भो किः ॥ ७३ ॥

गौ वाचि भुसंज्ञकेभ्यो धुभ्यः किर्भवति भावे अकर्तरीति वर्तते । प्रादीयते अस्मात् प्रादिः । निधीयते ऽसौ निधिः । संधानं संधिः ।

कर्मण्यधिकरणे ॥ ७४ ॥

कर्मणि वाचि अधिकरणे कारके भुसंज्ञकेभ्यः किर्भवति । जलं धीयते अस्मिन् जलधिः । वालधिः । अधिकरणग्रहणं कारकान्तरनिवृत्यर्थम् ।

स्त्रियां क्तिः ॥ ७५ ॥

भावे अकर्तरीति वर्तते । स्त्रीलिंगे धोः क्तिर्भवति । घ-

अचोरपवादोऽयम् । कृतिः । सृष्टिः । संपतिः । संपदादिभ्यः क्विबपि वक्तव्यः । संपत् । विपत् । ग्लाज्यादाभ्यो तिः स्त्रियां वक्तव्यः । ग्लानिः हानिः । ऋकारांतलवादिभ्यः क्तिस्तवद्भवतीति वक्तव्यम् । कीर्णिः । गीर्णिः । लूतिः । पूतिः । इत उत्तर स्त्रियामित्यधिकारः ।

## कर्म्मव्यतिहारे ञः ॥ ७६ ॥

इह कर्म्मव्यतिहारः क्रियाव्यतिहारः गृह्यते घोरधिकारात् । कर्म्मव्यतिहारे गम्यमाने घोर्ञ प्रत्ययं त्यो भवति स्त्रियाम् । परस्परस्य व्याक्रोशनं व्याक्रोशी जास्त्रियामिति । स्वार्थिकोण् । कृद्ग्रहणे णिकारकपूर्वस्यापीति सतिकाद्भवति एवं व्यावलेखी व्यावहारी वर्तते । स्त्रियामित्येव । व्यतिपाको वर्तते । मध्येऽपवादाः पूर्वान् विधीन्बाधन्ते नोत्तरान् इति स्त्रियांक्तिरित्यस्यैव बाधको न सरोर्हलइति अत्यस्य । व्यतीक्षा व्यतीहा वर्तते ॥ कथं व्यात्युक्षी । युद्यावहुलमिति बहुलवचनात् व्याकुष्टिरित्येवमादिषु क्तिरपि ।

## णेः ॥ ७७ ॥

णयन्ताच्च कर्म्मव्यतिहारे ञो भवति । अस्य बाधके युचि प्राप्तेऽयमारम्भः । व्यावचोरी व्यावचर्ची वर्तते ॥

## यूतिजूतिसातिहेतिकीर्तयः ॥ ७८ ॥

यूत्यादयः शब्दा निपात्यंते । यौतिजवत्योर्दीर्घत्वं निपात्यते । यूतिः । जूतिः । स्यतेः सुनोतेर्वा सातिः । इत्वाभावः आत्वं च निपात्यते । हिनोतेर्हन्तेर्वा हेतिः । कीर्तयतेः युचि प्राप्ते कीर्तिः ॥

## स्थागापापचो भावे ॥ ७९ ॥

स्था गा पा पच् इत्येतेभ्यः स्त्रीलिंगे भावे क्तिर्भवति भावग्रहणमकर्तरीत्यस्य निरासार्थम् । प्रस्थितिः । संस्थितिः । गाइत्यविशेषेण ग्रहणम् । उपगीतिः । उद्गीतिः । पिबतेः प्रपीतिः । निपीतिः । पक्तिः । आतो णाविति षितः इति च अङ् प्राप्तः तद्बाधनार्थमिदम् । गणे ऽव्यवस्थायामसंज्ञायामिति निर्देशादङपि भवति । संस्था । श्रुयजीषिस्तुभ्यः स्त्रियां करणे युड्बाधनार्थं क्तिर्वक्तव्यः । श्रूयतेऽनयेति श्रुतिः । इष्टिः । इष्टः । स्तुतिः ॥

## व्रजयजः क्यप् ॥ ८० ॥

भाव इति वर्तते । व्रज यज इत्येताभ्यां स्त्रीलिंगे भावे क्यप् । व्रज्या । इज्या । पित्करणमुत्तरार्थम् ॥

## समजनिषदनिपदमनविदषुशीङ्भृञिणः खौ ॥ ८१ ॥

भाव एवेति निवृत्तम् । द्वयमनुवर्तते । समजादिभ्यः स्त्रियां क्यप् भवति खुविषये । समजन्ति तस्यां समज्या । क्यपि वीभावः कस्मान्न भवति । बहुलंखाविति तत्रापेक्ष्यते । निषीदन्ति अस्यां निषद्या । निपद्यंते अस्यां निपद्या । केचित्पदिस्थाने पतिं पठंति । मन्यते अनया मन्या । विद्यते अनया विद्या । सुनोति तस्यां सुत्या । शेते अस्यां शय्या । भरणं भृत्या । भाव एवाभिधानं करणे वा । इत्या । कथं भार्या कर्म्मणि भविष्यति । अथवातज्याश्चार्ह इत्येवमादिषु विशेषेण विधानात् । असंज्ञानामिपेस्त्रीत्या न बाधकाः मतिबुद्धिपूजार्थाश्च कर्म्मणि भर्तौ रजःकृष्यासुतिपर्षदो वल इति ज्ञापकात् क्वचित्क्तिरपि भवति । मतिः । वित्तिः । आसुतिः । भृतिः ॥

## कृञः श च ॥ ८२ ॥

करोतेः स्त्रियां शो भवति क्यप् च । यदा भावकर्म्मणो-

शस्तदा मध्ये यक् रिग्यगिलङ्क्षुइति रिगादेशः यदापादानादिविवक्षा तदा यग्नास्ति रिगादेशेयदेशौ । क्रिया । कृत्या । गरस्येपिविकृतेरिति ज्ञापकात् क्तिरपि भवति । कृतिः ॥

इच्छा ॥ ८३ ॥

इच्छेति निपात्यते । इष इच्छायामित्यस्माद्भावे शः यगभावश्च निपात्यते । क्तेरपवादोऽयम् । परिचर्यापरिसर्यो मृगयाणां निपातनं वक्तव्यम् । परिपूर्वाच्चरेः शः सरतेरेप् च निपात्यते । मृगयतेः शप् शो यगभावश्च निपात्यते । जागर्तेरशौ वक्तव्यौ। जागरा । जागर्या । शे यक् । जागुरचिञिणङ्गितीति एप् ।

अस्त्यात् ॥ ८४ ॥

अ इत्ययं त्यो भवति तेभ्यो धुभ्यः स्त्रियाम् । चिकीर्षा । लोलूया । अटाट्या । पुत्रीया । पुत्रकाम्या । कण्डूया ॥

सरोर्हलः ॥ ८५ ॥

सरुर्हलन्तो यो धुः ततः स्त्रियामस्त्यो भवति । कुण्डा । चुण्डा । मेधा । ईहा । पर्याप्तिवचनेऽलमर्थ इतिनिर्देशात् ये सेटस्तेषामिह ग्रहणम् । तेनेह न भवति । आप्तिः । दीप्तिः । गाढिः । स्रस्तिः । प्रध्वस्तिः । प्रशस्तिः । प्रशंसायां रूप इतिनिर्देशात् । शंसेरत्योऽपि भवति । सरोरिति किम् । निपठितिः । हल इत्येव । नीतिः ॥

षिद्भिदादिभ्योऽङ् ॥ ८६ ॥

षिद्भ्यो धुभ्यः भिदादिषु च गणपठितेषु याः प्रकृतयस्ताभ्यश्चाङ् भवति स्त्रियाम् । जृष् । जरा । त्रपूष् । त्रपा । घटादयः षितः । घटा । व्यथा । युद्व्या बहुलमिति बहुलवचनात् लभिधलम्भेति च भवति । भिदादिभ्यः खल्वपि । भिदा विदारणे

भित्तिरन्या । छिदा द्वैधीकरणे । छित्तिरन्या । विदा विचारणे । वित्तिरन्या । क्षिपा प्रेरणे क्षिप्तिरन्या । गुहा गिर्योषध्योः । गूढिरन्या । कुहा । नद्याम् । कुहना अन्या । आरा शस्त्र्याम् । आर्तिरन्या । तारा ज्योतिषि । तार्णिरन्या । एषि कृते दीत्वमनयोर्निपातनात् । वपा मेदोविशेषे । उप्तिरन्या । वश्या शरीरगतस्नेहे उष्टिरन्या । मृजा शरीरसंस्कारे । मृष्टिरन्या । धारा वर्षप्रपाते । धृतिरन्या । निपातनादात्वम् । कृपेर्जिश्च । कृपा । गोधा । हारा । रेखा । लेखा । निपातनादेव । चूडा । वीडा ॥

चिन्तिपूजिकथिकुम्भिचर्चः ॥ ८७ ॥

चिन्त्यादिभ्यो धुभ्यः स्त्रियामङ् भवति । युचोऽपवादोऽयम् । चिन्ता । पूजा । कथा । कुंभा । चर्चा ॥

आतो गौ ॥ ८८ ॥

आकारान्तेभ्यो धुभ्यः गौवाचि अङ् भवति । क्तेरपवादः । प्रदा । प्रधा । प्रपिबन्त्यस्यां प्रपा । पिबतेर्भावे क्तिर्विहितः । श्रद्धाश्रद्धाऽऽवृत्तिभ्यो णः तिरोऽन्तर्द्धाविति प्रयोगात् अदन्त योर्गिवद्वृत्तिः । श्रद्धा । अन्तर्धा ॥

राथासश्रन्थघट्टिवन्दिविदो युच् ॥ ८९ ॥

णयन्तेभ्यः आस श्रन्थ घट्ट वन्द् विद् इत्येतेभ्यो धुभ्यः स्त्रियां युच् भवति । णयन्तात् अस्त्यादिति इतरेभ्यः सरोर्हल इत्यकारः प्राप्तः विदेः क्तिः प्राप्तः । कारणा । गणना । कामना । आसना । श्रन्थना । घट्टना । वन्दना । वेदना । वेदना अनुभये वेदनादन्ह इष्या । इषेोऽनिच्छायां युज् वक्तव्यः । अन्वेषणा । परेषा । पर्येषणा । परीष्टिः । युड्ठ्या बहुलमिति वा भविष्यति । ठ्यानां स्त्रीत्याः प्रबाधका इत्युक्तम् । तेन आस्या उपास्या ॥

## स्त्रौ विभाषा वुण् ॥ ८० ॥

स्त्रुविषये विभाषया वुण् भवति धोः। क्यादीनामपवादाः प्रस्कन्दिका। प्रच्छर्दिका। प्रवाहिका। विचर्चिका। एता रोगसंज्ञाः। उद्दालकपुष्पभंजिका। वारणपुष्पप्रचायिका। अभ्योषखादिका। शालभञ्जिका। एताः क्रीडासंज्ञकाः। कृञ्जलणा कर्मणि ता। क्रीडाजीविकयोर्नित्यमितिनित्यः सविधिः। उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायां इत्येवमादिरस्वपदविग्रहो बोद्धव्यः। विभाषा ग्रहणादिह न भवति शीर्षर्तिः शीर्षोभितप्तिः। शिरोर्तिः धावृत्ति रोरित्यै। वा भवितव्यमिति चेन्न अर्द हिंसायामित्यस्य प्रयोगः चन्दनतक्षक्रीडेवं विभाषाग्रहणात् ध्वर्थनिर्देशे ऽपि वुण् भवति। आसिका शायिका वर्तते।

## वेञ् प्रश्नाख्या ॥ ८१ ॥

प्रश्ने आख्याने च गम्यमाने धोरिञ् भवति वुराच वा। कां त्वं कारिमकार्षीः काङ्कारिकां वा। वचनाद्यथाप्राप्तं च भवति। कां क्रियां कां कृत्यां कां कृतिम्। आख्याने सर्वां कारिमकार्षं सर्वां करिकां सर्वां क्रियां सर्वां कृत्यां सर्वां कृतिम्। कां त्वं गणिमजीगणः कां गणिकां कां गणाम्। सर्वां गणिर्मया गणिता। सर्वा गणिका सर्वा गणना। कां त्वं पाठिमपाठीः कां पाठिकां कां पठितिम्। सर्वा मया पाठिः पठिता सर्वा पाठिका सर्वा पठितिः। प्रश्नाख्यान इति किम्। कृतिः।

## पर्यायार्हर्णोत्पत्तौ वुण् ॥ ८२ ॥

पर्याय अर्ह ऋण उत्पत्ति इत्येतेष्वर्थेषु गम्यमानेषु धोर्वुण् भवति स्त्रियाम्। पर्यायोऽनुक्रमः तस्मिन् भवतः शायिका। भवतोऽग्रगामिका। कर्तृकर्मणोः कृतीति कर्तरि ता। तृजकाभ्यामिति तासप्रतिषेधः। अर्हणमर्हः योग्यता तत्र अर्हति

समिदम् । अन्यथा परपुत्रपरिष्वञ्जनेपि स्यात् । सुखमिति किम् । कण्टकानां मर्दनम् ।

करणाधिकरणयोः ॥ ९९ ॥

करणे ऽधिकरणे च कारकेऽभिधेये युट् भवति । घञाद्यपवाद । करणे इध्मव्रश्चनः । पलाशशातनः । असिलवनः । कर्मणि ता । कृतीति तासः । अधिकरणे गोदोहनी । शक्रधानी । तिलपीडनी । परत्वात् क्त्यादिकं स्त्रीत्वं बाधते ।

पुंखौ घः प्रायेण ॥ १०० ॥

करणाधिकरणयोरिति वर्तते पुंल्लिङ्गसंज्ञायां गम्यमानायां घो भवति प्रायेण । घकारःवादेर्घः इत्यत्र विशेषणार्थः । प्रच्छदः । उरश्छदः । प्लवः आखनः । अधिकरणे । एत्य कुर्वन्त्यस्मिन्नाकरः । आलवः । आपवः । पुंग्रहणं किम् । प्रधानम् । विचवनी । नपुंसकलिंगा स्त्रीलिंगा चेयं संज्ञा । खाविति किम् । हरणो दण्डः । प्रायेणेति किम् । क्वचिन्न भवति । प्रसाधनः । दोहनः ।

हृस्त्रोवे घञ् ॥ १०१ ॥

हृस्तृ इत्येताभ्यां अवशब्दे वाचि घञ् भवति करणाधिकरणयोः पुंखौ । अवहारः । अवतारः । कथमसंज्ञायामवतारो नद्या इति चिन्त्यमेतत् ।

हलः ॥ १०२ ॥

हलन्ताद्धोर्घञ् भवति करणाधिकरणयोः पुंखौ । घापवादोऽयम् । वेदः नेगः वेशः गंधः संगः विषंगः । तैलोदकम् । घृतोदकम् । नात्रयत्र घञि घे वा विशेषः । इमानि तस्युदाहरणानि । खेलः मामार्गः अपामार्ग प्रासादः आखानः । प्रायेणेति अनुवर्तनात् हलन्तेभ्यः केभ्यश्चित् घञ् न भवति घ एव भवति । अधिकरणे कषः निकषः निगसः गोचरः आपणः करणे संचर-

बहुव्रतः इह व्यजन्त्यस्मिन्निति व्यजः । बहुलवचनाद्वेर्वी-
भावो न भवति । इह उदकोद्घनः । दोहनः प्रसाधन इति
घघञौ न भवतः । आखनः आखानः इत्यत्रोभयं भवति ।

संहारोद्यावानायावहारावायाः ॥ १०३ ॥

संहारादयः शब्दा घञ निपात्यंते पुंखौ । अहलन्त-
त्वात् पूर्वेणाप्राप्तिः । संहरति तेन संहारः । करणेऽधिकरणे वा
उद्यावः आनयन्ति तेन आनायो जालं चेत् । अवहरन्ति तेन
अवहारः । एत्य तस्मिन् वयन्ति आवायः अध्यायानुवाकयोर्वाप्
आधारोधिकरण इति ज्ञापकात् उञ्छादिषु न्यायशब्दस्य
निर्देशात् अधीयते अनेनाध्यायः । आधीयते अस्मिन् आधारः ।
नीयतेऽनेन न्यायः एतेऽपि शब्दाः साधवः ।

स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः ॥ १०४ ॥

सु ईषत् दुस् इत्येतेषु वाक्षु कृच्छ्रे अकृच्छ्रे वार्थे खो भवति
धोः । कृच्छ्राकृच्छ्रग्रहणं स्वादिविशेषणम् । सुकरः कटो भवता
ईषत्करः कटो भवता । दुष्करः कटो भवता । तयोरर्थयोः खला-
र्थाइति कर्मणि खः । नञ्झितेत्यादिना ताप्रतिषेधः । ञित्वात्पू-
र्वपदस्य मुम्न भवति । कृच्छ्राकृच्छ्र इति किम् । ईषत्कार्यः । मना-
क्कार्य इत्यर्थः ।

कर्तृकर्मणोर्भूकृभ्याम् ॥ १०५ ॥

स्वीषद्दुसि कृच्छ्राकृच्छ्रे ख इति वर्तते कृच्छ्रग्रहणसामर्थ्यात्
कर्तृकर्मग्रहणं वाग्विशेषणं कर्तृकर्मणि च वाचि भू कृञ्
इत्येताभ्यां यथासंख्यं खो भवति सु ईषत् दुस् इत्येतेषु वाक्षु
कृच्छ्रे अकृच्छ्रे चार्थे । तयस्य खित्करणमुमर्थमिति पूर्वं कर्तृकर्मभ्यां
योगः पश्चात्स्वादिभिः प्रायेणेत्यनुवर्तनात् कर्तृकर्मणो-
श्च्व्यर्थयोर्ग्रहणम् । अनाढ्येन सुखमाढ्येन भूयते स्वाढ्यंभवं

भवता । ईषदाढ्यंभवं भवता । सुखमनाढ्यमाढ्यक्रियते स्वाढ्यंकरो देवदत्तो भवता । ईषदाढ्यकरः । दुराढ्यङ्करः । सूत्रन्यासेपरत्वात्कर्तृकर्मणोः वाक्यं कृत्वा पश्चात्पूर्वस्य क्रियतेऽव्यार्थयोरिति किम् । स्वाढ्येन भूयते । स्वाढ्येन क्रियते । यदा करोति विकारार्थः तदा सुकटंकराणि वीरणानि । यदा निष्पत्तिवचना तदा सुकरः कटो वीरणैरिति ।

## युज्जातः ॥ १०६ ॥

स्वीषद्दुषि कृच्छ्राकृच्छ्र इति वर्तते आकारान्तेभ्यो धुभ्यो युज् भवति स्वादिषु कृच्छ्राकृच्छ्रार्थेषु वाक्षु । सुपानं पयो भवता । ईषत्पानम् । दुष्पानम् । सुग्लानम् । ईषद्ग्लाम् । सुग्लानम् । ईषद्ग्लानम् । दुग्लानम् । खापवादोयम् । प्रायेणेति वर्तते । तेन दुःशब्दे वाचि शासियुधिदृशिधृषिमृषिभ्यः युज् भवति । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः । सुदर्शनादिषु वसो द्रष्टव्यः ।

## भवद्वद्वा तत्सामीप्ये ॥ १०७ ॥

भवच्छब्दो वर्तमानपर्यायः समीपमेव सामीप्यं भवतीव त्यविधिर्भवति वा तत्समीपे भूते भविष्यति च वार्थे वर्तमानाद्धोः । संप्रतीत्यारभ्य आ पादपरिसमाप्तेर्विहितास्त्या अतिदिश्यन्ते । कदा देवदत्त आगतोऽसि । एष आगच्छामि । आगच्छन्तमेव मां विद्धि । एष आगामुकोस्मि । वावचनाद्यथाप्राप्तम् । एष आगतोस्मि कदा देवदत्त गमिष्यसि । एष गच्छामि । गच्छन्तमेव मां विद्धि । गन्तारमेव मां विद्धि । पक्षे एष गमिष्यामि एषोस्मि गन्ता । वत्करणं किमर्थम् । प्रकृतिविशेषादिपरिग्रहार्थम् । तत्सामीप्यग्रहणं व्यवहितनित्यार्थम् । कदा ग्राममगच्छत् । श्वः करिष्यति इह मा भूत् । नन्वत्र लुटा भवितव्यं कथं लृट् । पदसंस्कारवेलायां श्वःप्रभृतिपदानामसंनि-

धानादि दोषः ।

भूतवच्चाशंसायम् ॥ १०८ ॥

आशंसनमाशंसा भविष्यत्कालविषया तस्यां गम्यमानायां भूतवत्प्रत्ययविधिर्भवति भवद्वच्च वा । भूतग्रहणेन भूतसामान्ये विहितस्य प्रत्ययस्य परिग्रहः । उपाध्यायश्चेदागमिष्यति उपाध्यायश्चेदागमत् उपाध्यायश्चेदागतः तदा तर्कमधीमहे अध्येष्यामहे अध्यगीष्महि एषोधीतस्तर्कः । आशंसायामिति किम् । उपाध्याय आगमिष्यति ।

क्षिप्रवचने लृट् ॥ १०९ ॥

आशंसायामिति वर्तते । क्षिप्रार्थे शब्दे वाचि लृट् भवत्याशंसायां गम्यमानायाम् । भूतवच्चेत्यस्यापवादः । उपाध्यायश्चेदागमिष्यति क्षिप्रमध्येष्यामहे शीघ्रमध्येष्यामहे । नेति वक्तव्ये लृट्ग्रहणं लुट्विषयेपि यथा स्यात् इत्येवमर्थम् । श्वःक्षिप्रमध्येष्यामहे ।

लिङाशंसोक्तौ ॥ ११० ॥

आशंसा उच्यते येन शब्देन तस्मिन् वाचि लिङ् भवत्याशंसायां गम्यमानायाम् । अयमपि भूतवच्चेत्यस्यापवादः । उपाध्यायश्चेदागच्छेत् आशंसे युक्तो अधीयीय । अवकल्पये युक्तोऽधीयीय । परत्वाल्लृटो बाधकोऽयम् । आशंसे क्षिप्रमधीयीय ॥

न लङ्लुट् सामीप्याद्व्युच्छित्योः ॥ १११ ॥

सामीप्यं तुल्यजातीयेनाव्यवधानम् । व्युच्छित्तिः क्रियाप्रबन्धः । लङ्लुटौ न भवतः सामीप्याव्युच्छित्योः गम्यमानयोः । अनद्यतनविहितयोर्लङ्लुटोरयं प्रतिषेधः । सामीप्ये । येयं पौर्णमास्यतिक्रांता एतस्यां देवानपूपुजामः । अतिथीनभू-

भुञ्जामः । येयमनागामिनी एतस्यां देवान् पूजयिष्यामः अतिथीन् भोजयिष्यामः । अभ्युत्थितौ यावज्जीवीत् भृश-मन्नमदात् यावज्जीविष्यति भृशमन्नं दास्यति ॥

वत्स्यर्त्यवरेऽवधेः ॥ ११२ ॥

यद्यपि लङ्लुङिति प्रकृतं तथापीह वत्स्यद्ग्रहणाल्लुट एव प्रतिषेधः वत्स्यतिकाले अवरस्मिन् भागे लुटान भवति । असामीप्यार्थ्युच्छित्त्यर्थोऽयमारंभः । कालविभाग उत्तरत्र वक्ष्यते । देशविभागे अयं प्रतिषेधः । योयमध्वा गन्तव्य आ चित्रकूटात् तस्य यदवरं मथुरायाः तत्र द्विरोदनं भोक्ष्यामहे द्विःसक्तून्पा-स्यामः । वत्स्यतीति किम् । योऽयमध्वा गतः आ चित्रकूटात् तस्य यदवरं मथुरायां तत्र युक्ता द्विरध्यैमहि । अवर इति किम् । योऽयमध्वा गन्तव्य आ चित्रकूटात् तस्य यत्परं मथुरायास्तत्र युक्ता द्विरध्येतास्महे । अवधेरिति किम् । योऽयमध्वा गन्तव्यो निरवधिकः तस्य यदवरं मथुरायाः तत्र युक्ता द्विर-ध्येतास्महे ।

कालविभागेऽनहोरात्राणाम् ॥ ११३ ॥

वत्स्यर्त्यवरेऽवधेरिति वर्तते । वत्स्यति काले अवरस्मि-न्कालविभागेऽहोरात्रसंबंधविवर्जिते लुटान भवति । पूर्वेण प्रति-षेधे सिद्धेऽप्यहोरात्रसंबंधिविभागप्रतिषेधार्थं वचनम् । काल-विभागग्रहणमिहार्थमुत्तरार्थं च । योयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्रार्हत्पूजां करिष्यामहे अतिथिभ्यो दानं दास्यामहे । वत्स्यतीत्येव । योयं संवत्सरोतीतस्तस्य यदवर-माग्रहायण्याः तत्र युक्ता द्विरध्यैमहि । अवर इति किम् । वा पर इति वक्ष्यति । अवधेरित्येव । योयं निरवधिकः काल आगामी तस्य यदवरमाग्रहायण्याः तत्र युक्ता द्विरध्येतास्महे ।

अनहोरात्राणामिति किम् । योऽयं त्रिंशद्रात्र आगामी तस्य योवरः पञ्चदशरात्रस्तत्र युक्ता द्विरध्येतास्महे । योयंत्रिंशद्रात्र आगामी तस्य योऽवरः अर्द्धमासः तत्र द्विरध्येतास्महे । योयं मास आगामी तस्य योवरः पञ्चदशरात्रः तत्र द्विरध्येतास्महे । प्रसज्य इतिप्रतिषेधात् त्रिविधमुदाहरणम् ।

वा परे ॥ ११४ ॥

कालविभाग इति वर्तते । परस्मिन्नवधेः कालविभागे वत्स्यंति वा लुरान भवति न चेदहोरात्राणां विभागः । योयं संवत्सरः आगामी तस्य यत्परमाग्रहायण्याः तत्र द्विरध्येष्यामहे अध्येतास्महे वा । सामीप्याठ्युच्छित्तिविवक्षायामपि परत्वादयं विकल्पः । अनहोरात्राणामित्येव । योयं त्रिंशद्रात्र आगामी तस्य यः परः पंचदशरात्रः तत्र द्विरध्येतास्महे । सामीप्याठ्युच्छित्योर्लुटः प्रतिषेध एव । वत्स्यंतीत्येव । योऽयं संवत्सरोऽतीतः तस्य यत्परमाग्रहायण्याः तत्र द्विरध्यैमहि । अवधेरित्येव । योयं निरवधिः काल आगामी तस्य यत्परमाग्रहायण्याः तत्र द्विरध्येतास्महे । कालविभाग इत्येव । योऽयमध्वा गन्तव्यः आ चित्रकूटात् तस्य यत्परं मथुरायास्तत्र द्विरध्येतास्महे सर्वत्र लुड् भवति नचेदठ्युच्छित्तिविवक्षा ।

लिङ्हेतौ लृङ् क्रियाऽवृत्तौ ॥११५॥

वत्स्यंतीति वर्तते हेतुर्निमित्तं लिङ्हेतौ वत्स्यंति काले लृङ् भवति क्रियाया अवृत्तौ सत्याम् । हेतुफलयोर्लिङित्येवमादि लिङ्निमित्तं वक्ष्यति । अतिथींश्चेद्दलिप्स्यत भुशमन्नमदास्यत् अत्रान्नदानं फलं तद्धेतुभूतोऽतिथिलाभः तदनभिनिर्वृत्तिं प्रमाणादवगम्येदं वाक्यं प्रयुक्तम् । एवमुपाध्यायं चेदुपाश्रिष्यत शास्त्रांतमगमिष्यत् । अभोक्ष्यत भवान् दध्ना यदि मत्स-

मीपे आशिष्यत । इह दक्षिणो न चेद्याइयत् न पर्य्याभवि-ष्यदिति यानमनिष्पन्नं पर्याभवनं तु निष्पन्नमिति कथमवृत्तिः क्रियायाः । एवं तर्हि प्रत्यासत्तेः हेतुभूतायोः क्रियायाः अवृत्ताविति द्रष्टव्यम् क्रियायाः अवृत्तावपि शक्तिरूपेण क्रियाम-ध्यारोप्य कर्तृत्वेनाभिसंबंधः क्रियते यथा भूतभविष्यत्कालवि-षयायाः कर्तृत्वेनाभिसंबंधः ।

भूते ॥ ११६ ॥

भूते च काले लिङ्हेतौ क्रियाया अवृत्तौ सत्यां लृङ् भवति । उताप्योः पृष्ठोक्तौ लिङित्यतः प्रभृति कालसामान्ये यल्लिङ्निमित्तं विधानं तत्रानेन भूते लृङ् ततः पूर्वं तु वाशेषा-दित्यनेनैव विकल्पः सिद्धः । दृष्टो मया भवतः पुत्रोऽन्नार्थी चङ्क्रम्यमाणः इतरश्चातिथ्यर्थी यदि तेन भविष्यत उताभोक्ष्य-त । अप्यभोक्ष्यत अन्येन यथा सगतः नापि भुक्तवान् इदं सर्वं प्रतिवचनम् ।

वाऽशेषात् ॥ ११७ ॥

वक्ष्यति शेषे यदौ लृङिति आ एतस्मात्सूत्रावधेः यदित ऊर्ध्वमनुक्रमिष्यामः भूते काले लिङ्हेतौ क्रियाया अवृत्तौ लृङ् भवतीत्येतदधिकृतं वेदितव्यम् । परस्तु लृङो विधिर्नित्य इति तत्रैवोदाहरिष्यामः ।

लङ् गर्हेऽपिजात्वोः ॥ ११८ ॥

अपि जातु इत्येतयोर्वाचोः लङ् भवति गर्हे गम्यमाने । अयं कालसामान्ये विहितो लट् कालविशेषे विहितान् लकारान् परत्वाद्बाधते । अपि तत्र भवान् प्राणिनो हन्ति । जातु तत्र भवान् प्राणिनो हन्ति गर्हामहे । अन्याय्यमेतत् । लिङ्हेत्व-भावात् भूते क्रियावृत्तौ लृङ् न भवति ।

## वा कथमि लिङ् च ॥ ११९ ॥

गर्हे इति वर्तते । कथं शब्दे वाचि लिङ् भवति लङ्वा । कथं नाम तत्र भवान् मांसं भक्षयेत् । मांसं भक्षयति । गर्हामहे अन्याय्यमेतत् । वावचनाद्यथाप्राप्तम् । अबभक्षत् । अभक्षयत् भक्षयाञ्चकार । भक्षयिष्यति । भक्षयिता । अत्र लिङ्हेतुरस्तीति भूते क्रियावृत्तौ वा लृङ् भवति अभक्षयिष्यत् । वर्त्स्यंति नित्यं लृङ् ।

## किंवृत्ते लिङ्लृटौ ॥ १२० ॥

गर्हे इति वर्तते वेति नाधिकृतं विभक्त्यन्तस्य डतरडतमान्तस्य च किमो वर्तनं किंवृत्तम् । किंवृत्ते वाचि गर्हे गम्यमाने लिङ्लृटौ भवतः । सर्वलकाराणामयमपवादः । किं तत्र भवान् अनृतं ब्रूयात् अनृतं वक्ष्यति । लिङ्हेतुरस्तीति भूते वा लृङ् भवति वर्त्स्यंति तु नित्यः ।

## अनवक्लृप्त्यमर्षे ॥ १२१ ॥

गर्हे इति निवृत्तम् । लिङ्लृटाविति वर्तते । अनवक्लृप्त्यर्थे अवमर्षे च गम्यमाने लिङ्लृट् इत्येतौ स्यौ भवतः । अयमपि सर्वलकाराणामपवादः । अनवक्लृप्तौ नावकल्पयामि न संभावयामि न वा श्रद्दधे किं तत्र भवानदत्तं गृह्णीयात् अदत्तं ग्रहीष्ये-त्यमर्षे धिङ् मिथ्यानैतदस्त्यमर्षो मे किं तत्र भवानदत्तं गृह्णीयात् अदत्तं ग्रहीष्यति । किंवृत्तेरकिंवृते च वाचि सामान्येनायं विधिः । लिङ्हेतुरस्तीति भूते क्रियावृत्तौ वा लृङ् । वर्त्स्यंति तु नित्यः ।

## किंकिलास्त्यर्थे लृट् ॥ १२२ ॥

अनवक्लृप्त्यमर्षे इति वर्तते । किंकिलशब्दे अस्त्यर्थेषु च शब्देषु वाक्षु अनवक्लृप्त्यमर्षयोः लृट् भवति । लिङोऽपवादः । नावकल्पयामि किंकिल तत्र भवान् परदारान् प्रकरिष्यते । गंध-

नादिसूत्रेणान्याये दः । अस्त्यर्थ अस्तिभवतिविद्यतयः । अस्ति नाम भवति नाम विद्यते नाम तत्र भवान् परदारान् प्रकरिष्यते ।

## जातुयद्यदायदौ लिङ् ॥ १२३ ॥

अनवक्लृप्त्यमर्ष इति वर्तते । जातुयद्यदायदीत्येतेषु वाच्यु अनवक्लृप्त्यमर्षयोर्लिङ् भवति । लृटोऽपवादः । नावकल्पयामि जातु तत्र भवान् सुरां पिबेत् । यत्तत्र भवान् सुरां पिबेत् यदा तत्र भवान् सुरां पिबेत् यदि तत्र भवान् सुरां पिबेत् न मृष्यामि जातु तत्र भवान् सुरां पिबेत् इत्येवमादि योज्यम् । लिङ्हेतुरस्तीति भूते वा लृङ् वर्त्स्यति तु नित्यः ।

## यच्चयत्रयोः ॥ १२४ ॥

अनवक्लृप्त्यमर्ष इति वर्तते । यच्च यत्र इत्येतयोर्वाचो-अनवक्लृप्त्यमर्षयोर्लिङ् भवति । लृटोऽपवादः । उत्तरार्थो योगविभागः । न संभावयामि यच्च तत्र भवान् परिवादं कथयेत् । यत्र तत्र भवान् परिवादं कथयेत् । न मृष्यामि यच्च तत्र भवान् परिवादं कथयेत् । यत्र तत्र भवान् परिवादं कथयेत् । क्रियाप्रवृत्तौ भूते वा लृङ् । वर्त्स्यति तु नित्यः ।

## गर्हे ॥ १२५ ॥

अनवक्लृप्त्यमर्ष इति निवृत्तम् । अर्थान्तरोपादानात् । यच्च यत्र इत्येतयोर्वाचोः गर्हे गम्यमाने लिङ् भवति । सर्वलकाराणामपवादः । यच्च तत्र भवान् भस्यानाक्रोशेत विद्वानवृद्धः सन्नुत्कृष्टः गर्हामहे । अन्याय्यमेतत् । लिङ्हेतुरस्तीति यथासंभवं लृङ् वेदितव्यः ।

## चित्रार्थे ॥ १२६ ॥

चित्रशब्दस्यार्थे गम्यमाने यच्चयत्रयोर्वाचोर्लिङ् भवति । सर्वलकारापवादः । यच्च तत्र भवान् लोभं कुर्यात् यत्र तत्र भवान् लोभं कुर्यात् विद्वान् वृद्धः सन्नुत्कृष्टः चित्रमाश्चर्यमद्भुतं विस्मयमित्येषामन्यतमप्रयोगः । लिङ्हेतुरस्तीति भूते क्रियावृत्तौ वा वत्स्यति तु नित्यः ।

शेषेऽयदौ लृट् ॥ १२७ ॥

यच्चयत्राभ्यामन्यश्चित्रार्थः शेषः । शेषे चित्रार्थे गम्यमाने लृड् भवति यदिशब्दश्चेद्वाङ् भवति । अयमपि सर्वलकारापवादः । चित्रमाश्चर्यमद्भुतं विस्मयनित्यमन्धो नाम पुस्तकं वाचयिष्यति मूको नाम जैनेद्रमध्येष्यते । लिङ्हेत्वभावात् लृङ् वा न भवति । अयदाविति किम् । आश्चर्यं यदि स भुंजीत अत्रानवक्लृप्तिश्चित्रार्थश्च प्रतीयते जातुयद्यदायदौ लिङिति लिङ्भूते वाशेषादिति लृङधिकारो निवृत्तः ।

उताप्योः पृष्टोक्तौ लिङ् ॥ १२८ ॥

उत अपि इत्येतयोर्वाचोः पृष्टस्योक्तौ गम्यमानायां लिङ् भवति । सर्वलकारापवादः । किमकार्षीः कटं देवदत्त इति पृष्टः प्रत्याह उत कुर्यात् । अपि कुर्यात् कटं कृतवानित्यर्थः । इतः प्रभृति यत्र लिङ्हेतुरस्ति तत्र वत्स्यति भूते च नित्यो लृङ् उताकरिष्यत् । अप्याकरिष्यत् । पृष्टोक्ताविति किम् । उत दण्डः पतिष्यति । अपि धास्यति द्वारम् । अत्र प्रश्नोघट्टनं च प्रतीयते ।

इच्छोद्बोधेऽकच्चिति ॥ १२९ ॥

इच्छोद्बोधः स्वाभिप्रायनिवेदनम् । इच्छोद्बोधे गम्यमाने

लिङ् भवति कच्चिच्छब्दाप्रयोगे । सर्वलकारापवादः । कामो मे अधीयीत भवान् । अभिलाषो मे इच्छा मे भुंजीत भवान् । अकच्चितीति किम् । कच्चिज्जीवति मे माता । कच्चिज्जीवति मे पिता माढाविद् त्वां पृच्छामि कच्चिज्जीवति पार्वती ।

संभावनेऽलमि स्यानिनि ॥ १३० ॥

लिङिति वर्तते । संभावनं क्रियायां सामर्थ्यश्रद्धा । अलंशब्दश्चेह पर्याप्तिवचनः । यस्य यत्रार्थो गम्यते न चासौ प्रयुज्यते स तत्र स्थानीशब्दः । अलमर्थविशिष्टे संभावने लिङ् भवति अलंशब्दे स्थानिनि । सर्वलकारापवादः । शक्यसंभावने अपि हस्तिनं हन्यात् । अपि स्तुयाद्राजानम् । अशक्यसंभावने अपि पर्वतं शिरसा भिन्द्यात् । अपि स्वारीयकं भुञ्जीत । अपि समुद्रं दोर्भ्यां तरेत् । अलमिति किम् । निर्देशस्थायी मे देवदत्तो मन्ये गमिष्यति ग्राम अग्राहमिति । स्थानिनीति किम् । वसन्ति तेत सुराष्ट्रेषु वन्दिष्यते अलमर्जतम् । क्रियाप्रवृतौ वत्स्र्यति भूते लृङ् भवति ।

तद्वाचि धौ वाऽयदि ॥ १३१ ॥

अलमीति वर्तते तच्छब्देन संभावनं परामृश्यते अलमर्थविशिष्टे सम्भावनवाचिनि धौ साधि वा लिङ् भवति । यच्छब्दाप्रयोगे पूर्वेण नित्यो लिङ् ।

हेतुफलयोर्लिङ् ॥ १३२ ॥

हेतुः कारणं फलं कार्यं हेतौ तत्काले च ध्वर्थे वर्तमानाद्धोः लिङ् भवति । अतिथींश्चेल्लभेत भृशमन्नं ददीत यदि गुरुपुंजां कुर्वीत स्वर्गमारोहेत् । वेत्यनुवर्तनात्पक्षे लृट् । अतिथींश्चेल्लप्स्यते भृशमन्नं दास्यते । लिङिति वर्तमाने पुनर्लिङ्ग्रहणं वत्स्र्यति यथा स्यादिह मा भूत् । वर्षतीति धावति । हन्तीति

पलायते । क्रियावृत्तौ वत्स्यंति भूते च नित्यो लृङ् ।

इच्छार्थे लिङ्लोटौ ॥ १३३ ॥

इच्छार्थे धौ वाचि लिङ्लोटौ त्यौ भवतः । सर्वलकारापवादौ । वेति व्यवस्थितविभाषानुवर्तते । तेन कामप्रकाशने इदं विधानम् । इच्छामि भुञ्जीत भवान् । भुङ्क्तां भवान् । प्रार्थये अधीयीत भवान् । अधीतां भवान् । कामप्रकाशन इति किम् । इह मा भूत् इच्छन् करोति । नात्र प्रयोक्तुः कामप्रवेदनम् । उताप्योः पृष्टोक्ताविव्यत आरभ्य यत्र केवलो लिङ्हेतुः शिष्यते तत्र क्रियावृत्तौ लृङ् नान्यत्रेति केचित् ।

तुमेककर्तृके ॥ १३५ ॥

इच्छार्थे एककर्तृके धौ वाचि तुम्भवति यस्मात्तुम् विधीयते प्रत्यासत्तेः तदपेक्षयैककर्तृकत्वम् । लिङ्लोटोरपवादोऽयम् । इच्छति भोक्तुम् । वाञ्छति कर्तुम् । कामयते कर्तुम् । एककर्तृक इति किम् । देवदत्तं भुञ्जानमिच्छति परः । इह कस्मान्न भवति । इच्छति कटं करोति चैनम् । नात्र करोतिं प्रतीच्छतेः सामर्थ्यं किन्तु कटं प्रति तेनान्वर्थं वाक्यसंज्ञाविरहात्तुम् न भवति ।

लिङ् ॥ १३६ ॥

इच्छार्थे एककर्तृके धौ वाचि तुम् भवति । पूर्वं तुमा लिङ्लोटौ बाधितौ पुनर्लिङ्प्रसवार्थमेतत् । योगविभाग उत्तरार्थः । अधीयीयेति इच्छति । भुञ्जीयेति वाञ्छति । इति शब्दः क्रियाशब्दसंबन्धद्योतनार्थः ।

तेभ्यो भवति वा ॥ १३७ ॥

तेभ्य इच्छार्थेभ्यो धुभ्यः भवति काले वा लिङ् भवति । इच्छेत् । इच्छति । कामयेत । कामयते । उश्यात् । वष्टि ।

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थने लिङ् ॥१३८॥

विधिराज्ञापनम् । निमन्त्रणं नियमेन करणम् । यदकरणे प्रत्यवाय इत्यर्थः । आमन्त्रणं स्वेच्छया करणम् । अधीष्टः सत्कारपूर्विका व्यापारणा । संप्रश्नः संप्रधारणा । प्रार्थनं याच्ञा । विध्यादिष्वर्थेषु लिङ् भवति । सर्वत्यापवादः । विध्यादिविशिष्टेषु कर्त्रादिषु त्यार्थेषु लिङ् भवति इत्यर्थः । कटं भवान् कुर्यात् । प्राणिनो भवान्न हिंस्यात् । निमन्त्रणे संध्यासु भवान् आवश्यकं कुर्यात् । आचारं भवानधीयीत । आमन्त्रणे इह भवानासीत इह भवान् शयीत । अधीष्टे अधीच्छामो भवान् व्रतं रक्षेत् । तत्वं भवान् गृह्णीयात् । संप्रश्ने किन्नु खलु भोः जैनेन्द्रमधीयीय । प्रार्थने भवति मे प्रार्थना व्याकरणमधीयीय तर्कशास्त्रमधीयीय । यदि विध्यादिषु प्रकृत्युपाधिषु लिङ् विधीयेत । इह विदध्यात् निमन्त्रयेत आमन्त्रयेत अधीच्छेत् । प्रकृत्येवं विध्यादयो विधीयन्ते इति लिङ् प्राप्नोति तस्माद्विध्यादयः कर्तृकर्मभावानां विशेषणानि तदभावादिह लिङ् न भवति विदधति निमन्त्रयते आमन्त्रयते अधीच्छति अत्र क्रियाया अवृत्तौ परत्वाल्लटा लृङ् बाध्यते ।

लोट् ॥ १३९ ॥

लोट् भवति विध्यादिविशिष्टेषु कर्त्रादिषु च विधौ । ग्रामं भवानागच्छतु । प्राणिनो भवान्न हिनस्तु । निमन्त्रणे संध्यासु भवानावश्यकं करोतु । आचारमधीताम् । आमंत्रणे । इह भवानास्ताम् । इह शेताम् । अधीष्टे अधीच्छामो भवान् व्रतं रक्षतु । तत्वं भवान् गृह्णातु । संप्रश्ने किन्नु खलु भो काव्यमध्ययै । प्रार्थने भवति मे प्रार्थना धर्मशास्त्रमध्ययै । योगविभाग उत्तरार्थः ।

प्रैषातिसर्गप्राप्तकाले व्याश्च ॥ १४० ॥

प्रेषणं प्रैषः । अतिसर्गः कामचारानुज्ञा । प्राप्तकाल प्राप्तकालता विशिष्टस्य कालस्यावसर इत्यर्थः । प्रैषादिष्वर्थेषु कर्त्रादिविशेषणत्वेन गम्यमानेषु व्यसंज्ञकास्त्या भवन्ति लोट् च । भवता खलु दानं दातव्यं दानीयं देयम् । भवानिह प्रेषितः । भवानतिसृष्टः । भवतो हि प्राप्तः कालः । यद्यपि व्यसंज्ञा सामान्येन भावकर्मणोर्विहितास्तथापि सर्वापवादेषु लोटा बाध्येरन्निति पुनर्विधीयन्ते ।

लिङ् चोदूर्ध्वर्द्धं मौहूर्तिके ॥ १४१ ॥

प्रैषादयोऽनुवर्तन्ते । ऊर्ध्वं मुहूर्ताद्भवः ऊर्ध्वमौहूर्तिकः। निपातात्सविधिरुत्तरपदस्य वैप् । ऊर्ध्वमौहूर्तिकेर्थे वर्तमानाद्धोः प्रैषादौ गम्यमाने लिङ् भवति चकाराद्व्याश्च । उपरि मुहूर्तस्य भवान् खलु दानं दद्यात् । भवता खलु दानं दातव्यं दानीयं देयम् । केचिच्चकारेण यथाप्राप्तं समुच्चिन्वन्ति । तेषां लोडपि भवति । भवान् खलु दानं ददातु । भवान् हि प्रेषितः । भवानतिसृष्टः । भवतो हि प्राप्तः कालः ।

स्मे लोट् ॥ १४२ ॥

प्रैषादयो ऽनुवर्तन्ते । ऊर्ध्वमौहूर्तिक इति च स्मशब्दे वाचि प्रैषादिषु गम्यमानेषु ऊर्ध्वं मौहूर्तिकेर्थे लोट् भवति । व्यानां लिङश्चापवादः । ऊर्ध्वं मुहूर्ताद्भवान् दानं ददातु स्म । भवान् हि प्रेषितः । भवानतिसृष्टः । भवतो हि प्राप्तः कालः ।

अधीष्टे ॥ १४३ ॥

ऊर्ध्वमौहूर्तिक इति निवृत्तम् । अधीष्टे गम्यमाने

समशब्दे वाचि लोड्भवति लिङो बाधकः । अंग स्म राजन् दानं देहि व्रतं रक्ष ।

कालसमयवेलासु तुम् वा ॥ १४४ ॥

काल समय वेला इत्येतेषु वाक्षु धोः तुम् भवति वा । कालो भोक्तुम् । समयो भोक्तुम् । वेला भोक्तुम् वा । वावचनाद्यथाप्राप्तं च भवति । कालो भोक्तव्यस्य । प्रैषादिग्रहणमनुवर्तते । तेनेह न भवति । कालः पचति भूतानि कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ।

लिङ् यदि ॥ १४५ ॥

यच्छब्दप्रयोगे कालादिषु वाक्षु धोर्लिङ् भवति । तुमोऽपवादः । कालो यत्प्रजां कुर्वीत भवान् । समयो यद्भुञ्जीत भवान् । वेला यच्छयीत भवान् । केचिद्वेत्यनुवर्तयन्ति तेषां यथाप्राप्तमपि ।

तृव्याश्चार्हे ॥ १४६ ॥

अर्हतीत्यर्हः । अर्हे कर्तरि गम्यमाने तृव्याश्च भवन्ति लिङ् च । भवान् खलु कन्यायाः वोढा । भवता कन्या वोढव्या वहनीया वाह्या । भवान् खलु कन्यां वहेत् भवान् योग्य इत्यर्थः । अर्हेऽर्थे लिङा विधीयमानेन तृचो व्यानां च बाधा मा भूत् इति पुनर्विधानम् ।

आवश्यकाधमर्ण्ययोर्णिन् ॥ १४७ ॥

अवश्यं भाव आवश्यकम् । मनोज्ञादिपाठाद्वुञ् । अधमं ऋणमस्य अधमर्णः तद्भाव आधमर्ण्यम् । आवश्यकाधमर्ण्य विशिष्टे स्यार्थे कर्तरि णिन् भवति । अवश्यंहारी । मयूरव्यंसकादित्वात्सविधिः । शतंदायी । सहस्रंदायी । निष्कदायी आधमर्ण्येन इति कर्मणि ताया: प्रतिषेधः ।

व्याः ॥ १४८ ॥

आवश्यकाधमर्ण्ययोरिति वर्तते । आवश्यकाधमर्ण्ययो-र्व्यासंज्ञा भवन्ति । सर्वत्यापवादेन णिना व्यसंज्ञा बाधिता इति पुनर्विधीयन्ते । भवता खलु अवश्यं धर्मः कर्तव्यः । करणीयः । कृत्यः । कार्यः । आधमर्ण्ये भवता खलु निष्को दातव्यः । देयः । योगविभाग उत्तरार्थः ।

शकि लिङ् च ॥ १४९॥

शकीत्यर्थनिर्देशः । शक्नोत्यर्थविशिष्टे ध्वर्थे लिङ् भवति चकाराद् व्याश्च । भवता खलु विद्या अध्येतव्या । अध्ययनीया अध्येया । भवान् खलु विद्यामधीयीत । भवान् हि समर्थः लिङ् सर्वापवाद इति व्यानामनुकर्षणं क्रियते । यदि शकीति प्रकृत्यर्थविशेषणम् । शक्नुयादित्यत्र लिङ् प्राप्नोति प्रकृत्यैवाभि-हितत्वात् । शक्यर्थस्यानैष दोषः सामान्यविशेषभावेन भेदा-भ्युपगमात् । यथा एषितुमिच्छति एषिषिषति ।

आशिषि लिङ्लोटौ ॥ १५० ॥

इष्टस्याशंसनमाशीः । अत एव निपातनादिह इकारः । आशीर्विशिष्टेर्थे वर्तमानाद्धोः लिङ्लोटौ भवतः । चिरं जीव्यात् । जीव्यास्ताम् । जीव्यासुः । जीवतु । आशिषीति किम् । जीवति यदि पथ्याशी ।

क्तिच्क्तौ खौ ॥ १५१ ॥

आशिषीति वर्तते । आशिष्यर्थे क्तिक्तौ त्यौ भवतः खुविषये । चकारः न क्तिचि दीश्चेति विशेषणार्थः । तनुतात् तन्तिः । सनुतात् सातिः । भवताद्भूतिः । कुतः क्तिचा विशेष-विहितेन बाध्येरन्निति पुनर्विधीयन्ते । देवा एनं देयासुरिति देवदत्तः । देवा एनं श्रूयन्तु देवश्रुतः ।

माङि लुङ् ॥ १५२ ॥

माङि वाचि लुङ् भवति । सर्वलकारापवादः । मा कार्षीरधर्मम् । मा हार्षीत्परस्वम् । ङकारः प्रतिषेधवाचिनो माशब्दस्य ग्रहणं यथा स्यादित्येवमर्थः ।

सस्मे लङ् च ॥ १५३ ॥

सह स्मशब्देन वर्तते सस्मः । तस्मिन् माङि वाचि लङ् भवति लुङ् च । मा स्म क्रुध्यत् । मा स्म हरत् । म स्म हार्षीत् ।

इत्यभयनन्दिविरचितायां जैनेंद्रमहावृत्तौ द्वितीयाध्यायस्य तृतीयः पादः समाप्तः



॥ ॐ नमः ॥

## धुयोगे त्याः ॥ १ ॥

धुशब्देन ध्वर्थोत्र निर्दिष्टः । अभिधेये अभिधानस्योपचारात् । धूनां योगे सति अयथाकालोक्ता अपि त्याः साधवो भवन्ति । विश्वदृश्वा ऽस्य पुत्रो जनिता । कृतः कृतः श्वो भाविता । भाविकृत्यमासीत् विश्वदृश्वेति भूतकालः जनितेत्यनेन भविष्यत्कालेन साधुर्भवति । इहोपसर्जनभूतं सुबन्तं प्रधानभूतस्य मिङन्तस्य कालमनुवर्तते धोरितिवर्तमाने पुनर्धुग्रहणं अस्तिभूजनिपरिग्रहार्थम् । त्य इति वर्तमाने पुनस्त्यग्रहणं त्यमात्रपरिग्रहार्थम् । गोमान् भवितेति मत्वन्तस्य वर्तमानकालस्य अयथाकालत्वेन साधुत्वम् ।

## क्रियासमभिहारे लोट् तस्य हिस्वौ वा तध्वमोः ॥ २

क्रियासमभिहारविशिष्टे ध्वर्थे वर्तमानाद्धोर्लोट् भवति सर्वलकारापवादः । तस्य लोटः हि स्व इत्येतावादेशौ भवतः तध्वमोस्तु वा भवति । क्रियासमभिहारे लोडिति योगविभागः कर्तव्यः । ततस्तस्य हिस्वौ भवतः । किमेवं सति लब्धम् । अन्यत्र यौ लोडादेशौ हिस्वौ प्रसिद्धौ ताविह भवतः तेन सविधिद्विधिव्यतिकरो न भवति । वातध्वमो रित्यत्र ध्वमा सहनिर्देशात्तशब्दस्य यादेशस्य वहोर्ग्रहणम् । लुनीहि लुनीही इत्येवाहं लुनामि । आवां लुनीवः । लुनीहि लुनीहि इत्येव त्वं लुनासि युवां लुनीथः । यूयं लुनीथ । तशब्दस्य तु वा भवति लुनीत लुनीत इत्येव यूयं लुनीथ । लुनीहि लुनीहि इत्येवायं लुनाति । लुनीतः । इमे लुनन्ति । भूते लुनीहि लुनीहि इत्येवाहमलाविषम् । आवामलाविष्व । वयमलाविष्म । एवं युष्मदन्ययोरपि । वत्स्यंति लुनी

हिलुनीहीत्येव लविष्यामि । आवां लविष्यावः । वयं लविष्यामः । एवं युष्मदन्ययोरपि । अधीष्व अधीष्व इत्येवाहमधीये आवामधीवहे । वयमधीमहे । एवं युष्मदन्ययोरपि योज्यम् । ध्वमस्तु पक्षे श्रवणम् । अधीध्वमधीध्वमित्येवं यूयमधीध्वे । भूते अधीष्व अधीष्व इत्येवाहमध्यगीषि आवामध्यगीष्वहि । वयमध्यगीष्महि । एवं सर्वत्र । वर्त्स्यति अधीष्व इत्येवाहमध्येष्ये । आवामध्येष्यावहे । वयमध्येष्यामहे । एवं युष्मदन्ययोरपि । एवं शेषेष्वपि लकारेषु योज्यम् । द्वित्वमपेक्ष्य लोट् क्रियासमभिहारस्य द्योतकः योग इति वर्तते प्रत्यासत्तेर्यत एव लोट् विधीयते तस्यैवानुप्रयोगः कालास्मदाद्येकत्वादीनामभिव्यक्तये क्रियते ।

प्रचये वा ॥ ३ ॥

प्रचयः समुच्चयः । स चैकस्मिन् द्विप्रभृतेरध्यावायः । प्रचये उपाधौ वा लोट् भवति तस्य हिस्वावादेशौ भवतः तध्वमोस्तु वा । अयं सर्वलकारप्राप्तौ विकल्पः । कर्मप्रचयो ग्राममट । नगरमट गरिमटइत्येवाहमटामि आवामटावः । वयमटामः । ग्राममट नगरमट गिरिमटइत्येवं त्वमटसि । युवामटथः । यूयमटथ । तशब्दस्य तु वा ग्राममटत नगरमटत गिरिमटत इत्येव यूयमटथ । ग्राममट नगरमट गिरिमट इत्येवायमटति इमौ अटतः । इमे अटन्ति । वावचनात् ग्राममटामि नगरमटामि गिरिमटामि इत्येवाहमटामि । आवामटावः । वयमटामः । एवं युष्मदन्ययोरपि । एवं भूते वर्त्स्यति सर्वलकारेषु योज्यम् । इभाग्भ्यः जैनेन्द्रमधीष्व तर्कमधीष्व गणितमधीष्व इत्येवाहमधीये आवामधीवहे वयमधीमहे । जैनेन्द्रमधीष्व तर्कमधीष्व गणितमधीष्व इत्येव त्वमधीषे युवामधीयाथे यूयमधीध्वे । ध्वमस्तु वा जैनेन्द्रमधीध्वं तर्कमधीध्वं गणितमधीध्वं इत्येव

यूयमधीध्वे । जैनेन्द्रमधीष्व तर्कमधीष्व गणितमधीष्व इत्येवायमधीते इमौ अधीयाते इमे अधीयन्ते। वावचनात् जैनेन्द्रमधीये गणितमधीये तर्कमधीये इत्येवाहमधीये । आवामधीवहे । वयमधीमहे । एवं भूते वर्त्स्यति सर्वलकारेषु योज्यम् । कर्तृसमुच्चये देवदत्तोऽद्धि जिनदत्तोऽद्धि गुरुदत्तोऽद्धि इत्येव वयमोदनमद्मः । देवदत्तोऽद्धि जिनदत्तोऽद्धि गुरुदत्तोऽद्धि इत्येव यूयमोदनमत्थ । देवदत्तोऽद्धि जिनदत्तोऽद्धि गुरुदत्तोऽद्धि इत्येव इमे ओदनमदन्ति । कर्तृसमुच्चये द्विर्वचनं बहुवचनं वा भवति एकस्य समुच्चयाभावात् । क्रियासमुच्चये ओदनं भुङ्क्ष्व सक्तून् पिब धानाः खाद इत्येवाहमभ्यवहरामि आवामभ्यवहरावः वयमभ्यवहरामः । बहूनां क्रियाणां समुच्चये सामान्याप्रयोगोऽभिधानवशात् । एवं शंकरसमुच्चयेऽप्यूह्यः ।

## निषेधेऽलंखल्वोः क्त्वा ॥ ४ ॥

वेति वर्तते । अलं खलु इत्येतयोर्निषेधवाचिनोर्वाचोः धोः क्त्वाख्यो भवति। अलं कृत्वा । अलं बाले रुदित्वा । झिनामेवेति नियमात् वाक्सो न भवति । निषेध इति किम् । अलंकारः । अलंखल्वोरिति किम् । मा कार्षीः । वेत्येव । अलं रोदनेन । प्रकृत्यादिभ्य उपसंख्यानमिति भा ॥

## माङो व्यतिहारे ॥ ५ ॥

माङो व्यतिहारेऽर्थे क्त्वा भवति वा परकालत्वादप्राप्तः क्त्वा विभाष्यते । अपमित्य याचते । अपमित्य हरति । वेर्मेङ इतीत्वम् । वेत्यधिकारात् याचित्वा अपमयते । हृत्वा अपमयते । मेङः कृतात्वस्य निर्देशो ज्ञापकः । नानुबन्धकृतं हलन्तत्वम् ।

## परावरयोगे ॥ ६ ॥

परावराभ्यां योगे गम्यमाने धोःक्त्वा भवति वेति वर्तते ।

सम्बन्धिशब्दत्वात् परेण पूर्वस्य योगे अप्राप्य नदीं पर्वतः । परया नद्या युक्तः पर्वतः प्रतीयते । अवरेण योगे परस्य त्का । अतिक्रम्य पर्वतं नदी । अवरपर्वतयोगविशिष्टा परा नदी प्रतीयते । वावचनाल्लडादयो भवन्ति । न प्राप्नोति नदीं पर्वतः । अतिक्रामति पर्वतं नदी ॥

## परकालैककर्तृकात् ॥ ७ ॥

परः कालो यस्य सेयं परकाला क्रिया तया एककर्त्ता यस्य सामर्थ्यात् पूर्वकालक्रियाभिधायिनः स तथोक्तः । तस्माद्धोः त्का भवति । स्नात्वा भुङ्क्ते । स्नात्वा भुक्त्वा व्रजति । एककर्तृकादिति किम् । भुक्तवति देवदत्ते गच्छति जिनदत्तः । परकालग्रहणं किम् । सामर्थ्यात् पूर्वकालक्रियाऽभिधायिनो यथा स्यादिह मा भूत् । भुङ्क्ते च पिबति च आस्ते च जल्पति च इहापि कथंचित् पूर्वकालत्वविवक्षास्ति । व्यादाय स्वपिति । संमील्य हसति । इति वेत्यधिकारात् । भुङ्क्ते शेते च ।

## णम् चाभीक्ष्ण्ये ॥ ८ ॥

परकालैककर्तृकादिति वर्तते । मुहुर्मुहुर्वृत्तिराभीक्ष्ण्यम् । एतच्च प्रकृत्यर्थविशेषणम् । परकालैककर्तृकात् णमित्ययं त्यो भवति त्कात्यश्च । आभीक्ष्ण्ये भोजंभोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । पायं पायं गच्छति । पीत्वा पीत्वा गच्छति । त्काणमौ द्वित्वमपेक्ष्याभीक्ष्ण्यं द्योतयतः । पूर्वेण त्कात्ये सिद्धे णमर्थं वचनम् । इह वेति निवृत्तम् । उत्तरत्र वाग्रहणात् ।

## न यदनाकाङ्क्षे ८ ॥

यच्छब्दे वाचि त्काणमौ न भवतः अनाकाङ्क्षे सति वाक्ये अनन्तरव्यवहितभेदाभावात् पूर्वसूत्रविहितो अनन्तरश्च त्का निषिध्यते णम् च । यदयं भुङ्क्ते ततो गच्छति । यदयं

शेते ततोऽधीते । अनाकाङ्क्ष इति किम् । यदयं भुक्त्वा व्रजति । अधीत एव ततः परम् । अत्र पूर्वोत्तरक्रियाभ्यां व्यतिरिक्तमध्ययनं काङ्क्षते ।

वाग्रेप्रथमपूर्वे ॥ १० ॥

आभीक्ष्ण्य इति निवृत्तम् । परकालैककर्तृकादित्यनेन त्काप्राप्ते विभाषेयम् । अग्रे प्रथम पूर्व इत्येतेषु वाक्षु त्काणमौ वा भवतः । अग्रेभोजं ततो ददाति । अग्रे भुक्त्वा ततो ददाति । प्रथमंभोजं ततो ददाति । प्रथमं भुक्त्वा ततो ददाति । पूर्वं भोजं ततो ददाति । पूर्वं भुक्त्वा ततो ददाति । भिन्नामेवेत्यत्र एवकारोपादानात् केवलेनैवाभा विहितेन वाक्सो भवति नान्यसहितेन । वावचनाल्लडादयोऽपि भवन्ति । अग्रे भुङ्क्ते ततो ददाति । प्रथमं भुङ्क्ते ततो ददाति । पूर्वं भुङ्क्ते ततो ददाति ।

कर्मण्याक्रोशे कृञः खमुञ् ११ ॥

कर्मणि वाचि आक्रोशे गम्यमाने कृञः खमुञ् भवति । चोरोसीत्येवमाक्रोशति चोरङ्कारमाक्रोशति । दस्युङ्कारमाक्रोशति । त्कापवादोऽयम् । आक्रोश इति किम् । चोरं कृत्वा गच्छति । नात्राक्रोशसंपादनार्थं चोरग्रहणम् ।

स्वादुमि णम् ॥ १२ ॥

स्वादुमीत्यर्थनिर्देशः । स्वाद्वर्थेषु वाक्षु कृञो णम् भवति । परकालैककर्तृकादिति वर्तते । स्वादुङ्कारं भुङ्क्ते । संपन्नंकारं भुङ्क्ते । लवणंकारं भुङ्क्ते । स्वादुमीति णमुसन्नियोगे मकारान्तता निपात्यते । खमुञि प्रकृते स्वित्यक्षेर्मुमच इति मुमा सिद्धमिति चेत् च्व्यन्तविवक्षायां अक्षेरिति प्रतिषेधः प्रसज्येत । खमुञ्येव मान्तनिपातनं कर्तव्यमिति चेत्

च्व्यन्तार्थमेव तत्संभाव्येत णमि पुनर्निपातनं डीनिवृत्त्यर्थ दीर्घत्वनिवृत्त्यर्थं च । स्वादीकृत्वा यवागूं भुङ्क्ते । स्वादुंकारं भुङ्क्ते । च्विविवक्षायामस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते । च्वाविति दीत्वं प्रसज्येत । उत्तरार्थं च इह णम्ग्रहणम् विभाषाधिकारात् क्त्वापि भवति । क्त्वादय आतुमो विधीयमानाः भावे भवन्ति । ननु स्वादुंकारं भुङ्क्ते देवदत्त इति णमा कर्तुरनुक्तत्वात् कर्तरि ता प्राप्ता नक्तिकेत्यादिना ताः कर्तरि न भवति

अन्यथैवंकथमित्थंस्वनर्थात् ॥ १३ ॥

अन्यथा एवं कथं इत्येतेषु वाक्षु धुभ्यो णम् भवति अनर्थात् । येन विनापि यदर्थः प्रतीयते स तत्र प्रयुज्यमानोऽनर्थकः शब्दः तथाहि यावानेवार्थोऽन्यथा भुङ्क्ते इति तावानेव कृञ्प्रयोगेऽपि अन्यथाकारं भुङ्क्ते । एवंकारं भुङ्क्ते । कथंकारं भुङ्क्ते । अनर्थादिति किम् । अन्यथा कृत्वा शिरो भुङ्क्ते ।

यथातथयोरसूयाप्रत्युक्तौ ॥ १४ ॥

कृञोऽनर्थादिति वर्तते । यथातथाइत्येतयोर्वाचोः कृञोऽनर्थात् णम् भवति असूयाकृतायां प्रत्युक्तौ गम्यमानायाम् । कथं कृत्वा भवान् भुङ्क्ते इत्येवं पृष्टोऽसूयकः तं प्रत्याह यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । अनर्थादिति किम् । यथाकृत्वाहं बलिं भोक्ष्ये किं तवानेन । असूयाप्रत्युक्ताविति किम् । यथाकृत्वाहं भोक्ष्ये तथाकृत्वाहं भोक्ष्ये यदा द्रष्टव्यं भवता

कर्मण्यशेषे दृशिविदः ॥ १५ ॥

अशेषः कः साकल्यम् । इदं कर्मणो विशेषणं अशेषविशिष्टे कर्मणि वाचि दृशिविदोर्धोर्णम् भवति । साधुदर्शं प्रणमति

सर्वं साधुं प्रणामतीत्यर्थः । अतिथिवेदं भोजयति । यं यं विन्दति विन्ते वा तं सर्वं भोजयतीत्यर्थः । अशेष इति किम् । अतिथिं दृष्ट्वा भोजयति ।

यावति विन्दजीवः ॥ १६ ॥

यावच्छब्दे वाचि विन्दतिजीवत्योर्णम् भवति । यत्र पूर्वकालत्वं संभवति तत्र त्कापवादः । यत्र न संभवति तत्रापूर्व एव विधिः । धुयोग इति वर्तते । यावद्वेदं भुङ्क्ते । यावल्लभते तावद्भुङ्क्ते इत्यर्थः । यावज्जीवमधीते । यावज्जीवति तावदधीते इत्यर्थः ।

चर्मोदरयोः पूरेः ॥ १७ ॥

कर्मणीति वर्तते । चर्म उदर इत्येतयोः कर्मणोर्वाचोः पूरयतेर्णम् भवति । चर्मपूरं शेते । उदरपूरं भुङ्क्ते ।

वर्षप्रमाणे ॥ १८ ॥

कर्मणीति वर्तते । कर्मणि वाचि पूरयतेः णम् भवति समुदायेन वर्षप्रमाणे गम्यमाने । गोष्पदपूरं वृष्टो देवः । शीतापूरं वृष्टो देवः । कथं गोष्पदप्रं वृष्टो देवः प्रातेरातः के कृते क्रियाविशेषणत्वेन नपुंसकलिंगं एतस्य कन्तस्यैव विभक्त्यंतस्य च्व्यादिषु च प्रयोगः साधुः । गोष्पदप्रेण गोष्पदप्री भवति गोष्पदप्रतरम् गोष्पदपूरं वृष्टो देवः इत्येवमादावुभयथा प्रयोग इष्यते णमन्तस्य घञन्तस्य च क्रियाविशेषणभावेन प्लुतिर्विभक्त्यन्तरे च विशेषः णमन्तस्यहि देश्यादिषु गोष्पदपूरं भवति गोष्पदपूरंदेश्यम् गोष्पदपूरंदेशीयं गोष्पदपूरंकल्पं गोष्पदपूरंतराम् । घञन्तस्य गोष्पदपूरीभवति गोष्पदपूरदेश्यं गोष्पदपूरदेशीयम् गोष्पदपूरकल्पम् । गोष्पदपूरतराम् ।

चेलेषु क्नोपेः ॥ १९ ॥

कर्मणीति वर्तते । चेलार्थेषु कर्मसु वाक्षु क्नोपयतेर्णम् भवति वर्षप्रमाणे गम्ये । चेलक्नोपं वृष्टो देवः । एवं वस्त्रक्नोपं वसनक्नोपम् ।

शुष्कचूर्णभक्षेषु पिषः ॥ २० ॥

कर्मणीति वर्तते । शुष्क चूर्ण भक्ष इत्येतेषु कर्मसु वाक्षु पिषेर्द्वोर्णम् भवति । शुष्कपेषं पिनष्टि नगरम् । शुष्कं पिनष्टीत्यर्थः । एवं चूर्णपेषं पिनष्टि । भक्षपेषं पिनष्टि । घञि सति क्रियाविशेषणे शुष्कस्य पेषं पिनष्टि इत्येवमादयः प्रयोगाः साधवः । इतः प्रभृति उपदंशो भायामित्यतः प्राक् यत एव धोर्णम् भवति तस्यैवानुप्रयोगोऽपि भवत्यभिधानवशात् ।

जीवाकृते ग्रहिकृञः ॥ २१ ॥

कर्मणीति वर्तते । जीव अकृत इत्येतयोः कर्मवाचिनोर्वाचोर्यथासंख्यं ग्रहि कृञ् इत्येताभ्यां णम् भवति । जीवग्राहं गृहीतः । अकृतकारं करोति

निमूले कषः ॥ २२ ॥

कर्मणीति वर्तते । निमूले कर्मणि वाचि कषेर्णम् भवति । निमूलकाषं कषति । घञि सति क्रियाविशेषणे निमूलस्य काषं कषति इत्यपि भवति ।

समूले हनश्च ॥ २३ ॥

कर्मणीति वर्तते । समूले कर्मणि वाचि हन्तेः कषेश्च णम् भवति । समूलघातं हन्ति । समूलकाषं कषति ।

करणे ॥ २४ ॥

हन इति वर्तते । करणे वाचि हन्तेर्णम् भवति । पाणिघातं कुड्यं हन्ति । पाणिना हन्तीत्यर्थः । पादघातं शिलां हन्ति यदा हिंसार्थो हन्तेर्विवक्षितः तदा हिंसार्थादेककर्मकादिति

णमपि ईप्विधिं पूर्वविप्रतिषेधेन बाधित्वा अयमेव णम् अभिघातं हंति चौरान् कोऽत्र विशेषः अनेन नित्यः सविधिः तस्यैव धोरनुप्रयोगश्च भवति ।

हस्ते वर्तिग्रहः ॥ २५ ॥

करण इति वर्तते हस्त इति अर्थनिर्देशः । हस्तवाचिनि करणे वाचि वर्तयतिगृह्णातिभ्यां णम् भवति । हस्तवर्तं वर्तयति हस्तेन वर्तयति इत्यर्थः । एवं पाणिवर्तम् । करवर्तम् । हस्त ग्राहं गृह्णाति । हस्तेन गृह्णातीत्यर्थः । एवं पाणिग्राहं करग्राहम् ।

स्वेषु पुषः ॥ २६ ॥

करण इति वर्तते स्व इति स्वरूपस्य तद्विशेषाणां च ग्रहणम् । बहुत्वनिर्देशात् । स्ववाचिकरणवाचिनि पुषेर्ढ्रोर्णम् भवति । आत्मात्मीयज्ञातिधनानि स्वशब्देनोच्यन्ते । स्वपोषं पुष्टः । विद्यापोषं गोपोषं मातृपोषं पितृपोषं रैपोषं पुष्णाति । सर्वत्र घञन्तेन णमन्तस्यार्थकथनं द्रष्टव्यम् । स्वेन पोषं पुष्टं इति स एव पुषिः कालसाधनभेदादन्यत्वं गतः पुषिणा युज्यते यथा- एषितुमिच्छति एषिषिषति इषिरिषिणा युज्यते ।

स्नेहने पिषः ॥ २७ ॥

करण इति वर्तते । स्निह्यतेऽनेनेति स्नेहनं स्नेहनवाचिनि करणे वाचि पिषेर्ढ्रोर्णम् भवति । घृतपेषं पिनष्टि । घृतेन पिनष्टीत्यर्थः । एवं तैलपेषम् । उदपेषम् । पेषमीत्युदकस्योदादेशः ।

बन्धोऽधिकरणे ॥ २८ ॥

अधिकरणे वाचि बध्नातेर्णम् भवति । चक्रबन्धं बद्धः । चक्रे बद्ध इत्यर्थः । एवं चारकबन्धम् । दृष्टिबन्धम् । गुप्तिबन्धम् । बध्यमानाधारे वाचि णम् भवति न बन्धाधारे । हस्ते बध्नातीति वेत्यधिकाराद्वा न भवति ।

खौ ॥ २८

खुविषये च बध्नातेर्णम् भवति । चण्डालिकाबन्धं बद्धः । अट्टालिकाबन्धं बद्धः । महिषिकाबन्धं मयूरिकाबन्धं क्रौञ्च-बंधं बद्धः । णमन्ताः बन्धविशेषाणां संज्ञा एताः अर्थप्रदर्शनं तु यथाकथं चित्करणेन वाचा अन्यथा वा दर्शनीयम् । अन्ये तु व्याच-क्षते खुभूतो यो बन्धः तस्मिन् करणवाचिनि वाचि बध्नातेर्णम् भवति ।

कर्त्रोर्जीवपुरुषयोर्न्नशिवहोः ॥ ३० ॥

जीव पुरुष इत्येतयोः कर्तृवाचिनोर्वाचोर्यथाक्रमं नशि-वहिभ्यां णम् भवति । जीवनाशं नश्यति । जीवो नश्यती-त्यर्थः । पुरुषवाहं वहति । पुरुषो भूत्वा वहतीत्यर्थः । कर्त्रो-रिति किम् । जीवेन नष्टपुरुषं वहन्ति । अत्र करणं कर्म च वाक् ।

उदूर्ध्वे शुषिपूरोः ॥ ३१ ॥

कर्त्रोरिति वर्तते । उदूर्ध्वशब्दे कर्तृवाचिनि वाचि शुषि-पूरि इत्येताभ्यां णम् भवति । उदूर्ध्वशोषं शुष्कः । उदूर्ध्वः इत्यर्थः । उदूर्ध्वपूरं पूर्यते उर्ध्वं पूर्यत इत्यर्थः ।

कर्मणि चेवे ॥ ३२ ॥

शब्दे कार्यस्यासंभवादिवार्थ उपमानं गृह्यते । इवशब्दार्थे वर्तमाने कर्मणि कर्तरि भूवादिधोर्णम् भवति कर्मणि । घृतनि-धायं निहितः । घृतमिव निहित इत्यर्थः । एवं जीवितरक्षं रक्षितः । कर्तरि अक्रूरनाशं नष्टः । अक्रूर इव नष्ट इत्यर्थः । एव-मजकनाशं नष्टः । चूडकनाशं नष्टः । पिषादिषु यथाविध्यनुप्र-योगो न वक्तव्यः । धुयोग इति वर्तते तत्र प्रत्यासत्तेरभिधानव-शाद्वा घृत एव धोर्णम् तस्यैवानुप्रयोगः ।

उपदंशो भायाम् ॥ ३३

उपपूर्वाद्दंशेर्भान्ते वाचि णम् भवति धुयोग इति च

वर्तते । एककर्तृकादिति च पूर्वकालत्वं सम्भवतः संबन्धनीयम् । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं भुङ्क्ते । वा भादीतिविभाषया वाक्यः । इत ऊर्ध्वं यानि वाकसंज्ञकानि वक्ष्यन्ते तानि भादिग्रहणेन गृह्यन्ते सर्वत्रास्मिन् प्रकरणे वेत्यनुवर्तते तेन त्कापि भवति । मूलकेनोपदंश्य भुङ्क्ते । कर्मणः साधकतमत्वविवक्षायां भा भवति । अथवा उपदंशिगुणस्य भुञ्जेरेतत्करणम् ।

हिंस्यर्थादेककर्मकात् ॥ ३४ ॥

भायामिति वर्तते । हिंसार्थेभ्यो धुभ्योऽनुप्रयोगेणैककर्मकेभ्यः भांते वाचि णम् भवति । दण्डाघातं गाः सादयति । दण्डेनाघातम् । करणे इत्यनेन हन्तेर्घः पूर्वनिर्णयेन णम् विदितस्तस्यैवानुप्रयोगो द्रष्टव्यः । हन्तेरन्यदपीहोदाहरणम् । दण्डाताडं गाः कालयति । दण्डेनाताडम् । खड्गप्रहारं शत्रुन् विजयते । खड्गेन प्रहारम् । एककर्मकादिति किम् । दण्डेनाहत्य भूमिं गोपालको गाः सादयति ।

ईपि चोपपीडरुधकर्षः ॥ ३५ ॥

व्रजोपरोधम् । व्रजे उपरोधम् । व्रजेनोपरोधम् । उपाण्युपकर्षं धानाः पिनष्टि । पाणावुपकर्षम् । पाणिनोपकर्षम् ।

प्रमाणासत्त्योः ॥ ३६ ॥

ईपि भायां चेति वर्तते । प्रमाणमायाममानम् । आसत्तिः सन्निकर्षः । इबन्ते भान्ते वाचि धोर्णम् भवति प्रमाणासत्त्योर्गम्यमानयोः । द्व्यङ्गुलोत्कर्षं गण्डिका च्छिनत्ति । द्व्यङ्गुलोत्कर्षम् । द्व्यङ्गुलेनोत्कर्षम् । आसत्तौ केशग्राहं युध्यन्ते । केशेषु ग्राहं केशैर्ग्राहं सन्निकृष्टं युध्यन्ते इत्यर्थः । एवं अस्यपनोदं युध्यंते असिष्वपनोदम् । असिभिरपनोदम् । हस्तग्राहम् । हस्तेषु ग्राहम् । हस्तैर्ग्राहम् ।

स्वरपादाने ॥ ३७ ॥

त्वरणं त्वरा त्वरीति सौत्रभात्वम् । त्वरायां गम्यमानायां अपादाने वाचि घोर्णम् भवति । शय्योत्थायं धावति । शय्याया उत्थाय । मुखप्रक्षालनाद्यवश्यकार्यं कृत्वा त्वरत इत्यर्थः । एवं स्तनरंध्रापकर्षं पयः पिबति । स्तनरंध्रादपकर्षम् । काष्ठापकर्षं मयूरान् भक्षयति । काष्ठादपकर्षम् । वेत्यनुवर्तनात् शय्याया उत्थाय धावति । त्वरीति किम् । आसनादुत्थाय गच्छति ।

द्वपि ॥ ३८ ॥

त्वरीति वर्तते । द्व्यन्ते वाचि त्वरायां गम्यमानायां घोर्णम् भवति । यष्टिग्राहं युध्यन्ते । यष्टिं ग्राहम् त्वरया युद्धप्रहरणमनपेक्ष्य यष्टिमादाय युध्यते इत्यर्थः । एवं पटापकर्षं धावति पटमपकर्षम् । त्वरीत्येव खड्गं गृहीत्वा युध्यन्ते ।

स्वाङ्गे ध्रुवे ॥ ३९ ॥

द्व्यपीति वर्तते । यस्मिन्विनष्टेऽपि प्राणिनां मरणं न भवति तद्ध्रुवं स्वाङ्गम् । तस्मिन्द्व्यन्ते वाचि घोर्णम् भवति । अक्षिनिकोचं जल्पति । अक्षिणी निकोचम् । भ्रूक्षेपं जल्पति । भ्रुवं क्षेपम् अंगुलिनिकोटं जल्पति । अंगुलिं निकोटं जल्पति । अध्रुव इति किम् । शिर उत्क्षिप्य जल्पति । अद्रवं मूर्तिमत्स्वांगं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तेन चेत्तथा युतम् । आद्यैश्चतुर्भिर्विशेषणैर्लालाबुद्धिफलशोफादिरहितप्राणिस्थं वस्तु स्वांगमुक्तम् । अतत्स्थं तत्रदृष्टं चेत्यनेन भूमिपतितकेशादिपरिग्रहः । तेन चेत्तथायुतमित्यनेन काष्ठादिप्रतिमायां स्थितं पाण्यादि संगृहीतम् ।

सक्लेशे ॥ ४० ॥

इपीति वर्तते स्वांग इति वा । सह क्लेशेन दुःखेन वर्त्तते इति सक्लेशं क्लिश्यमानमित्यर्थः । इबन्ते सक्लेशे स्वाङ्गे वाचि घोणम् भवति । धवार्थोऽयमारम्भः । उरःप्रतिपेषं युध्यन्ते । उरांसि प्रतिपेषम् । उरांसि पीडयन्तो युध्यन्ते इत्यर्थः । एवं शिरःप्रतिपेषम् । शिरांसि प्रतिपेषम् ।

## विशिपतिपदिस्कंदो व्याप्यासेव्ययोः ॥ ४१ ॥

इपीति वर्तते । विश्यादिभिः कार्त्स्न्येन व्यापनीय द्रव्यं व्याप्यम् । क्रियारूपं तात्पर्येण आसेवनीयमासेव्यम् । क्रियाधारभूतमुपचाराद्द्रव्यमप्यासेव्यम् । विशि पति पदि स्कन्द इत्येतेभ्यो धुभ्यः व्याप्ये आसेव्ये च वाचि णम् भवति । गेहानुप्रवेशमास्ते । वृत्या व्यापनस्यासेवनस्य चोक्तत्वात् द्वित्वं न भवति । वाक्यपक्षे व्याप्यमानस्य द्रव्यस्य द्वित्वम् । आसेव्यविवक्षायां तु मुख्यस्यासेव्यस्य क्रियारूपस्य द्वित्वम् । गेहंगेहमनुप्रवेशमास्ते । गेहमनुप्रवेशमनुप्रवेशमास्ते । गेहानुप्रपातमास्ते । गेहंगेहमनुप्रपातम् । गेहमनुप्रपातमनुप्रपातमास्ते । गेहमनुप्रपादमास्ते । गेहंगेहमनुप्रपादम् । गेहमनुप्रपादमनुप्रपादम् । गेहावस्कन्दमास्ते । गेहंगेहमवस्कंदम् । गेहमवस्कंदमवस्कंदम् । वेत्यधिकारात् गेहं गेहमनुप्रविश्य गेहमनुप्रविश्यानुप्रविश्यास्ते । वीप्सायामाभीक्ष्ण्ये च द्वित्वम् । व्याप्यासेव्ययोरिति किम् । गेहमनुप्रविश्य भुङ्क्ते । णम् चाभीक्ष्ण्ये इति यद्यप्यासेव्ये णम् सिद्धः । तथापि वाक्यविकल्पार्थमिदम् ।

## तृष्यस्वोः क्रियान्तरे काले ॥ ४२ ॥

इपीति वर्तते । इबन्ते कालवाचिनि वाचि तृषि असु इत्येताभ्यां णम् भवति क्रियान्तरार्थे यद्यनुप्रयुज्यमानक्रियापेक्षया क्रियांतरे वृत्तिरित्यर्थः द्व्यहातर्षं गाः पाययति ।

द्व्यहमपतर्षम् । त्र्यहापतर्षम् । त्र्यहमपतर्षम् । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । त्र्यहमत्यासम् । कालाध्वन्यविच्छेद इतीप् । तृष्यस्वेरिति किम् । द्व्यहमुपोष्य भुङ्क्ते । क्रियांतर इति किम् । अहरत्यस्य गतः । अत्रास्यतिर्न क्रियान्तरे वर्तते किंतु गतावेव । काल इति किम् । पञ्च पूलान् अत्यस्य तिलान् भक्षयति ।

नाम्न्यादिशिग्रहः ॥ ४३ ॥

इपीति वर्तते । इबन्ते नामशब्दे वाचि आदिशिग्रहिभ्यां णम् भवति । नामादेशमाचष्टे । नामान्यादेशम् । नामग्राहमाकारयति । नामानि ग्राहम् ।

भावनिष्टोक्तौ कृञः त्काणमौ ॥ ४४ ॥

क्रिसंज्ञके वाचि अनिष्टोक्तौ गम्यमानायां कृञः त्काणमौ भवतः । वेत्यधिकारात् त्कात्वे सिद्धे पुनः त्काग्रहणं त्क इत्यनेन वृत्तिविकल्पार्थम् । णादीति तत्र वर्तते तेनोत्सर्गो त्कात्वे सविकल्पेर न स्यात् । ब्राह्मण पुत्रस्ते जातः किं तर्हि वृषल नीचैःकृत्याचष्टे । नीचैः कृत्वा । नीचैःकारम् । उच्चैर्नाम प्रियमाख्येयम् । नीचैराख्यायमानमनिष्ठं भवति । ब्राह्मण कन्या ते गर्भिणी । तर्हि वृषल उच्चैःकृत्याचष्टे । उच्चैःकृत्वा-उच्चैःकारम् । कन्यागर्भः उच्चैराख्येयमानो अनिष्टः । अनिष्टोक्ताविति किम् । उच्चैःकृत्याचष्टे पुत्रस्ते जात ।

तिरश्च्यपवर्गे ॥ ४५ ॥

अपवर्गः समाप्तिः तिर्यच्छब्दे वाचि अपवर्गे गम्यमाने कृञः त्काणमौ भवतः । तिर्यक्कृत्य गतः । तिर्यक्कृत्वा । तिर्यक्कारम् । समाप्य गत इत्यर्थः । अपवर्ग इति किम् । तिर्यक् कृत्वा काष्ठं गतः । तिरश्चीति तिर्यच्छब्दानुकरणनिर्देशः । प्रकृतिवदनुकरणं भवतीति रूपसिद्धिः ।

## खङ्कतस्त्ये कृभुवः ॥ ४६ ॥

तस्त्यो यस्मात्तथोक्तम् । तस्त्ये स्वाङ्गे वाचि कृ भू इत्येताभ्यां त्काणमौ भवतः । भिन्नयोगनिर्दिष्टत्वाद्यथासंख्यमत्र न भवति । मुखतःकृत्य गतः । मुखतः कृत्वा । मुखतःकारम् । पृष्ठतःकृत्य पृष्ठतः कृत्वा । पृष्ठतःकारम् । मुखतोभूय । मुखतोभूत्वा । मुखतोभावम् । पृष्ठतोभूय । पृष्ठतोभूत्वा । पृष्ठतोभावम् । अपादानेदीयरुहोरिति आदिभ्य उपसंख्यानमिति वा तसिः । स्वाङ्ग इति किम् । सर्वतःकृत्वा । तस्त्यग्रहणं किम् । मुखीकृत्य गतः । त्यग्रहणं किम् । मुखे तस्यति मुखतः अमुखतसं मुखतसं कृत्वा मुखतःकृत्य ।

## नाधार्थत्ये च्व्यर्थे ॥ ४७ ॥

नार्थो धार्थश्च त्यो यस्मात्स तथोक्तः । नार्थत्ये धार्थत्ये च शब्दे च्व्यर्थे वाचि कृभू इत्येताभ्यां त्काणमौ भवतः विनाकृत्य गतः । विनाकृत्वा । विनाकारम् । विनाभूय । विना भूत्वा । विनाभावम् । अनाना नाना कृत्य गतः । नानाकृत्वा । नाना कारम् । नानाभूय । नानाभूत्वा । नाना भावम् विनञ्भ्यां नानाञौ नसह इति नानाञौ भवतः । धार्थत्ये अद्विधा द्विधा कृत्य गतः । द्विधाकृत्वा । द्विधाकारम् । द्विधाभूय । द्विधाभूत्वा । द्विधाभावम् । अद्वैधं द्वैधं कृत्य गतः । द्वैधं कृत्वा । द्वैधंकारम् । द्वैध भूय । द्वैधं भूत्वा । द्वैधं भावम् । अद्वेधा द्वेधा कृत्यगतः । द्वेधाकृत्वा । द्वेधाकारम् । द्वेधाभूय । द्वेधाभूत्वा । द्वेधाभावम् । संख्यायाविधार्थेधा । द्वित्रेमञ् । एकधा । एकध्यंविधातंअर्थग्रहणं स्वरूपमात्रनिरासार्थम् । त्यग्रहणं किम् । नाधार्थे वाचीत्युच्यमाने इहापि स्यात् । अहिरुक् हिरुक्कृत्वा पृथक्कृत्वा च्विर्विकल्पेन विधास्यते ।

ऽध्यर्थमात्रमत्र विवक्षितं न च्विः । अर्थ इति किम् । नाना कृत्वा काष्ठानि गतः ।

तूष्णीमि भुवः ॥ ४८ ॥

तूष्णीम्शब्दे वाचि भूइत्येतस्मात् ङकाणमौ भवतः । तूष्णींभूयास्ते । तूष्णींभूत्वा । तूष्णींभावः ।

अन्वच्यानुलोम्ये ॥ ४९ ॥

आनुलोम्यमनुकूलता । अन्वच्छब्दे वाचि आनुलोम्ये गम्यमाने भुवः ङकाणमौ भवतः । अन्वग्भूत्वा । अन्वग्भावम् । आनुलोम्य इति किम् । अन्वग्भूत्वा आस्ते । पश्चाद्भूत्वेत्यर्थः । अन्वचीति निर्देशः प्रकृतिवदनुकरणमिति न्यायात् ।

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थे तुम् ॥ ५० ॥

शकादिषु अस्त्यर्थेषु च धुषु वाक्षु धोस्तुम् भवति । शक्नोति भोक्तुम् । धृष्णोति भोक्तुम् । जानाति भोक्तुम् । ग्लायति भोक्तुम् । घटते भोक्तुम् । आरभते भोक्तुम् । लभते भोक्तुम् । प्रक्रमते भोक्तुम् । सहते भोक्तुम् । अर्हति भोक्तुम् । अस्त्यर्थेषु अस्ति भोक्तुम् । भवति भोक्तुम् । विद्यते भोक्तुम् । क्रियायां तदर्थायां वाचि तुम् विहितः अतदर्थायामपि यथा स्यादित्यारम्भः ।

पर्याप्तिवचनेऽलमर्थे ॥ ५१ ॥

पर्याप्तिः प्रभूतत्वं सामर्थ्यं च अलमर्थेन विशेष्यमाणत्वात्सामर्थ्यमेवावतिष्ठते । पर्याप्तिवचनेष्वलमर्थविशिष्टे वाक्षु धोस्तुम् भवति । पर्याप्तो भोक्तुम् । समर्थो भोक्तुम् । प्रभुर्भोक्तुम् । अलं भोक्तुम् । पारयति भोक्तुम् । इदमप्यस्योदाहरणं युक्तम् । पुनरिदं विचारयितुं वाभादीति यसो न भवति ।

अमैवेति तत्र वर्तते। पर्याप्तिवचन इति किम्। अलङ्कृतो कन्याम्। अलं रुदित्वा। समर्थेऽिश्रति वक्तव्ये गुरुकरणं किम् सामर्थ्यमात्रे मा भूत्। शक्त्या भुङ्क्ते। बलेन भुङ्क्ते। असमर्थे इति किम्। पर्याप्तं भुङ्क्ते। प्रभूतं भुङ्क्ते। अन्यूनं भुङ्क्ते। पूर्वसूत्रे शक्तिः सौकर्ये वर्तते नालमर्थे।

## कर्तरि कृत् ॥ ५२ ॥

कर्तरि कारके कृत्संज्ञास्त्यादयो भवन्ति। अनिर्दिष्टार्थास्त्याः स्वार्थे भावे प्राप्ताः। कारकः। कर्ता। ये कृतः कर्तरि नेष्टाः तेषां करणाधिकरणयोर्युडित्येवमादिरपवाद उक्तः।

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ५३ ॥

भव्य इत्येवमादयः शब्दाः कर्तरि वा निपात्यन्ते। तयोर्व्यक्तखार्था इत्यस्मिन् प्राप्ते पक्षे कर्तरि विधानम्। भवत्यसौ भव्यः। भव्यमनेनेति वा। गेयो माणवकः षडङ्गस्य। गेयो माणवकेन षडङ्गः। प्रवचनीयो गुरुः शास्त्रस्य। प्रवचनीयं शास्त्रं गुरुणा। उपस्थानीयः शिष्यो गुरोः। उपस्थानीयो गुरुः शिष्येण। जायते असौ जन्यः। जन्यमनेन। जनिवध्योरित्यैप् प्रतिषेधः। अथवा शकिसहश्चेति चकारेण णेर्यः। आप्लवतेऽसौ आप्लाव्यः। आप्लाव्यमनेन। आपततीत्यापात्यः। आपात्यमनेन।

## लः कर्मणि च भावे चाधेः ॥ ५४ ॥

ल इति लडादीनां नवानामुत्सृष्टानुबन्धानां सामान्येन ग्रहणं जसा च निर्देशः। लकाराः सकर्मकेभ्यो धुभ्यः कर्मणि कर्तरि च कारके भवन्ति भावे कर्तरि च धिसंज्ञेभ्यः। कर्मणि। क्रियते कटः। गम्यते ग्रामः। कर्तरि करोति कटम्।

गच्छति ग्रामम् । घेर्भावे । आस्यते भवता । सुप्यते । कर्तरि आस्ते भवान् । स्वपिति भवान् । लौङीचेति वक्तव्ये प्रपञ्चेन निर्देशः किमर्थः सकर्मकेभ्यो लो भावे मा भूवन् ।

**तयोर्व्यक्तखार्थाः ॥ ५५ ॥**

तयोर्भावकर्मणोः व्यसंज्ञाश्च क्तश्च खार्थाश्च भवन्ति । कर्तरि कृदित्यस्यायमपवादः । कर्मणि कर्तव्यः कटो भवता । भोक्तव्य: ओदनो भवता । भावे आसितव्यं भवता । शयितव्यं भवता । क्तः कर्मणि कृतः कटो भवता । सुकरः कटो भवता । सुपानं पयो भवता । दुः पानं पयो भवता । भावे स्वासं भवता । दुरासं भवता । सुग्लानं भवता । दुर्ग्लानं भवता । आत्मकर्मविवक्षायां व्यक्तखार्थप्रयोगविषये सकर्मकाऽप्यविवक्षितकर्मकत्वेनाकर्मकात्तः । तेन भावे व्यादयः । भेत्तव्यं कुसूलेन स्वयमेव । भावकर्मग्रहणे तु वर्तमाने तयोरिति ग्रहणं यथाविधिप्रतिपादनार्थं सकर्मकेभ्यः कर्मणि अकर्मकेभ्यो भावे इति ।

**कर्तरि चारम्भे क्तः ॥ ५६ ॥**

आरम्भः आद्यः क्रियाक्षणः आरम्भे यो धुर्वर्तते तस्माद्धः क्तः स कर्तरि भवति यथाप्राप्तं च भावकर्मणोः । प्रकृतो भवान् कटम् । प्रकृतः कटो भवता । प्रकृतं भवता । प्रभुक्तो भवानोदनम् । प्रभुक्तः ओदनो भवता । प्रभुक्तं भवता । धिभ्यस्तु धिगत्यर्थाच्चेति वक्ष्यति । आद्यक्रियाक्षणकाले । कटो नाभिनिर्वृतः तस्योपचारात् भूतकालेन प्रकृतशब्देन सामानाधिकरण्यम् ।

**श्लिषशीङ्स्थासवसजनरुहजॄषश्च ॥ ५७ ॥**

श्लिषादिभ्यः कर्तरि क्तो भवति यथाप्राप्तं च भावकर्मणोः ।

धिगत्यर्थाच्चेति सिद्धे इह सकर्मकार्थमुपादानम् । इदमेव ज्ञापकम् । अकर्मका अपि भवन्ति । आश्लिष्टः कन्यां देवदत्तः । आश्लिष्टा कन्या देवदत्तेन । आश्लिष्टं देवदत्तस्य । अतिशयितो गुरुं भवान् । अतिशयितो भवता गुरुः । अतिशयितं भवतः । उपस्थितो गुरुं भवान् । उपस्थितो भवता गुरुः । उपस्थितं भवतः । उपासितो गुरुं भवान् । उपासितो भवता गुरुः । उपासितं भवतः । अनूषितो गुरुं भवान् । अनूषितो भवता गुरुः । अनूषितं भवतः । अनुजातो माणवको माणविकाम् । अनुजाता माणविका माणवकेण । अनुजातं माणवकस्य । आरूढो वृक्षं देवदत्तः । आरूढो वृक्षो देवदत्तेन । आरूढं देवदत्तस्य । अनुजीर्णो वृषलीं देवदत्तः । अनुजीर्णा वृषली देवदत्तेन । अनुजीर्णं देवदत्तस्य । रुहेरगत्यर्थत्वादन्यद्वपि गत्यर्थकार्यं न भवति । आरोहयति वृक्षं देवदत्तेन । कर्मसंज्ञा न भवति ।

धिगत्यर्थाच्च ॥ ५८ ॥

धिसंज्ञेभ्यः गत्यर्थेभ्यश्च धुभ्यः क्तस्तथः कर्तरि भवति यथाप्राप्तं च । आसितो भवान् । आसितं भवता । शयितो भवान् । शयितं भवता । गत्यर्थेभ्यः गतो भवान् ग्रामम् । गतो भवता ग्रामः । गतं भवता । यातो भवान् । यातो भवता ग्रामः । यातं भवता । कालभावाध्वभिः कर्मभिः सकर्मकवद्भवति ॥ तत्करणात् स्वाश्रयमपि भवति । अतस्त्रैरूप्यम् । सुप्तो भवान् मासम् । सुप्तो भवता मासः । सुप्तं भवता मासम् । ओदनपाकं सुप्तो भवान् । ओदनपाकः सुप्तो भवता । ओदनपाकं सुप्तं भवता । क्रोशं सुप्तो भवान् । क्रोशः सुप्तो भवता । क्रोशं सुप्तं भवता ।

## अधिकरणे चाद्यर्थाच्च ॥ ५९ ॥

क्त इति वर्तते अद्यर्था अभ्यवहारार्थाः । अद्यर्थेभ्यो ध्रिगत्यर्थेभ्यश्च क्तोऽधिकरणे भवति कर्तरि वा कर्मणि । यथाप्राप्तं च कर्तृकर्मभावेषु अद्यर्थेभ्यः अधिकरणकर्मभावेषु क्तः अधिकरणे अस्मिन्निमे भुञ्जते स्म इदमेषां भुक्तम् । इदमेषां पीतम् । क्तस्याधिकरण इति कर्तरि ता । कर्मणि एभिर्भुक्त ओदनः । एभिः पीतं मधु । भावे भुक्तं एभिः । पीतमेभिः । ध्रिभ्यः अधिकरणकर्तृभावेषु क्तः अधिकरणे इदमेषामासितम् । आसितो भवान् । आसितं भवता । गत्यर्थेभ्यः अधिकरणकर्तृकर्मभावेषु क्तः अधिकरणे इदमेषां यातम् । यातो देवदत्तो ग्रामम् । यातो देवदत्तेन ग्रामः । यातं देवदत्तेन । इह विभुक्ताः भ्रातरः पीता गावः इति मत्वर्थीयोऽकारः ।

## दाशगोघ्नौ संप्रदाने ॥ ६० ॥

दाशगोघ्न इत्येतौ शब्दौ निपात्येते संप्रदाने कारके दाशन्ति तस्मै दाशः । गां हन्ति अस्मै आगताय गोघ्नोऽतिथिः । टगत्र निपात्यः । स्त्रियां गोघ्नी देवदत्ता ।

## भीमादयोऽपादाने ॥ ६१ ॥

भीमादयः शब्दाः अपादाने कारके ज्ञातव्याः । भीमादयः शब्दा अन्यत्र साधिताः कारकनियमार्थमिह तेषां पाठः । बिभेत्यस्मादिति भीमः । भीष्मः । भयानकः । चरुः । प्रस्कन्दनम् । प्रपतनम् । समुद्रवन्त्यस्मात् समुद्रः । स्रुवः । स्रुक् । सृष्टिः । रक्षा । संकसंति तस्मात् संकसुकः । खलिनः ।

## उणादयोऽन्यत्राभ्याम् ॥ ६२ ॥

उणादयस्त्वया आभ्यां संप्रदानापादानाभ्यामन्येषु कारकेषु भवन्ति । करोतीति कारुः । वृश्चति तं वृत्तः । कषितो

ऽसौ कथिः । ततोऽसौ तन्तुः । वृतं तत्र वर्त्म । चरितं तत्रेति चर्म । भसितं तत्रेति भस्म । ऋचन्ति तया ऋक् ।

लस्य ॥ ६३ ॥

अकार उच्चारणार्थः । लस्येत्ययमधिकारः । यदित ऊर्द्ध्वमनुक्रमिष्यामः लस्य स्थाने तद्वेदितव्यम् । नव लकाराः पञ्च टितश्चत्वारो ङितः लट् लिट् लुट् लृट् लोट् लङ् लिङ् लुङ् लृङ् एषामनुबन्धापायेन लकारमात्रं स्थानित्वेनाधिक्रियते । त्य इति वर्त्तते । धोरिति च । धोर्विहितस्य त्यस्य लकारस्य ग्रहणात् लभते चूडाल इत्येवमादि परिहृतम् ।

मिब्वस्मस्सिप्थस्थतिप्तस्झीड्वहिमहिथासाथांध्वंतातांझङ् ॥ ६४ ॥

लस्य स्थाने मिबादयः आदेशा भवन्ति । पकारः गोऽपिदिति विशेषणार्थः । इटष्टकारोऽरब्लङ्क्षेट इति विशेषणार्थः । झङो ङकारः प्रत्याहारार्थः । पचामि । पचावः । पचामः । पचसि । पचथः । पचथ । पचति । पचतः । पचन्ति । टितां दविषये आदेशान्तराणि वक्ष्यन्ते । लिटो मानां णलादयः आदेशाः वक्ष्यन्ते । लुट् पक्तास्मि । पक्तास्वः । पक्तास्मः । इत्येवमादि ज्ञेयम् । लृट् पक्ष्यामि । पक्ष्यावः । पक्ष्यामः । लोट आदेशाः वक्ष्यन्ते ङितां लकाराणां मविषये च इह तानुदाहरिष्यामः । लङ् । अपचे । अपचावहि । अपचामहि । वक्ष्यते लिङ । लुङ् । अपक्षि । अपक्ष्वहि । अपक्ष्महि । लृङ् । अपक्ष्ये । अपक्ष्यावहि । अपक्ष्यामहि ।

टिद्दटेरे ॥ ६४ ॥

टितां लकाराणां ये दास्तेषां टेरेत्वं भवति । यत्र एक एवाच् तत्र व्यपदेशिवद्भावाद्दन्तत्वमुक्तम् । यत्र च तदादिरच्ये

नास्ति तत्रापि व्यपदेशिवद्भावात्तदादित्वम् । पचे । पचावहे । पचामहे । थासःसे इति वक्ष्यति। पचसे । पचेथे । पचध्वे। पचते । पचेते । पचन्ते । लिट् । पेचे । पेचिवहे । पेचिमहे । लुट् । पक्ताहे । पक्तास्वहे । पक्तास्महे । लृट् । पक्ष्ये । पक्ष्यावहे । पक्ष्यामहे । लोटो वक्ष्यति प्रकृतानां मिङां दस्य टेरैत्वम् । तेनेह न भवति पचान इति ।

थासः से ॥ ६५ ॥

टिद्ग्रहणमनुवर्तते । टितो लकारस्य थासः स इत्ययमादेशो भवति । पचसे । पेचिषे पक्तासे । पक्ष्यसे । एशिरेसेविधानेषु किं स्यादेत्वे प्रयोजनम् । आदेशे तु कृते मा भूत् ज्ञापकं भवितादिषु ।

लिटस्तझयोरेशिरे ॥ ६६ ॥

लिटादेशयोस्त झ इत्येतयोः एश् इरे इत्येतावादेशौ भवतः । शकारः सर्वादेशार्थः परस्यादिर्मा भूत् । पेचे । पेचिरे । नेमे । नेमिरे ।

मानां णलवमथाथुसणलतुसुसः ॥ ६७ ॥

लिट इति वर्तते । लिटो मानां स्थाने यथासंख्यं णलादयो नव आदेशा भवन्ति । णकारः ऐवर्थः । लकारः सर्वादेशार्थः । अ इति द्वयोरकारयोः प्रश्लेषनिर्देशः सर्वादेशार्थः । अल्पस्याकारस्याकारवचने प्रयोजनाभावात् सर्वादेश इति चेत् समसंख्यत्वं प्रयोजनं संभाव्येत । अथवा थोरिति कानिर्देशात् परस्यादेः थकारस्याकारः । पपाच । पेचिव पेचिम । पपक्थ । पेचिथ । पेचथुः । पेच । पपाच । पेचतुः । पेचुः । थेकोपदेशः इत्यादिना वेट् । सेटीति एत्वं च । वमयोः क्र्यादिसिनियमादिट् ।

विदो लटो वा ॥ ६८ ॥

मानामिति वर्तते । वेत्तेरुत्तरेषां लटो मानां स्थाने वा णलादयो भवन्ति । वेद । विद्व । विद्म । वेत्थ । विदथुः । विद । वेद । विदतुः । विदुः । न च भवन्ति । वेद्मि । विद्वः । विद्मः । वेत्सि । वित्थः । वित्थ । वेत्ति । वित्तः । विदन्ति । विदेरिति कानिर्देशात् ज्ञानार्थस्य ग्रहण लाभार्थस्य शेन व्यवधानात् ।

ब्रुव आहश्च ॥ ६९ ॥

मानामिति वर्तते । लटो वेति वर्तते । ब्रुव उत्तरस्य लटो मानां वा णलादयो भवन्ति । तत्सन्नियोगे ब्रुव आहादेशः । अकार उच्चारणार्थः । तथास्मद इत्युत्तरत्र प्रतिषेधात् अत्र पञ्च ग्रहणम् । आत्थ । आहथुः । आह । आहतुः । आहुः । सिपस्थे कृते आहस्थ इति हकारस्य थकारः । खरीति चत्वम् । यद्यत्र स्थानिवद्भावात् ब्रुव ईडिति ईट् स्यात् झलादिप्रकरणे आहस्थ इति वचनमनर्थकं स्यात् । न च भवति । ब्रवीषि । ब्रूथः । ब्रवीति । ब्रूतः । ब्रुवन्ति ।

न यास्मदः ॥ ७० ॥

ब्रूञः परस्य थस्यास्मदश्च पूर्वोक्ता आदेशा न भवन्ति । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः ।

लोटो लङ्वत् ॥ ७१ ॥

लोटो लङ इव कार्यं भवति । लोडादेशानां लङादेशानामिव कार्यमतिदिश्यते इत्यर्थः । पचाव । पचाम । ङितः सखं सिद्धम् । पचतम् । पचत । पचताम् मिप्थस्थतसोमृतंतामेतेत सिद्धम् । एरुरिति उकारः पुरस्तादपवादन्यायेन एर्मेइति इत्वमेव बाधते न जुसादेशम् । एवं च यथा अदुः अधुरिति

भवति तथा यान्तु पान्तु इत्यत्रापि जुसादेशः प्राप्नोति नैव दोषः वक्ष्यते आत लङो वेत्यत्र लङ् ग्रहणस्य प्रयोजनं लङ्व यो लङ् तस्य जुस् भवति अतिदेशेन यो लङ् तस्य मा भूत् लङ्वदिति तांताद्वत् तेनाडागमो न भवति ।

एरुः ॥ ७२ ॥

लोट इति वर्तते । मानामिति च । लोटो मानामिकारस्य उकारादेशो भवति । इत्वस्यापवादः । पचतु । पचन्तु । करोतु । कुर्वन्तु । मिप्सिपोरादेशान्तरमुत्वस्य बाधकं वक्ष्यते ।

सेर्ह्यपिच्च ॥ ७३ ॥

लोट इति वर्तते । सेर्हिरादेशो भवति अपिच्च । लुनीहि । आप्नुहि । राध्नुहि ।

मेर्निः ॥ ७४ ॥

लोटो मेर्निरित्ययमादेशो भवति । पचानि । करवाणि ।

आमेतः ॥ ७५ ॥

लोट इति वर्तते । लोडादेशस्य एकारः तस्य आमित्ययमादेशो भवति । निर्दिश्यमानस्यादेशो भवति । पचेथाम् । पचताम् । पचेताम् । पचन्ताम् ।

स्वोवामौ ॥ ७६ ॥

लोट इति वर्तते एत इति च । सकारवकाराभ्यां परस्य एत अम् इत्येतावादेशौ भवतः । पचस्व । पचध्वम् । वयस्व । वयध्वम् ।

पिच्चाडस्मदः ॥ ७७ ॥

लोट इति वर्तते । लोटोऽस्मदः आडागमो भवति

पिब । करवाणि । करवाव । करवाम । करवै । करवावहै । करवामहै ।

एत ऐ ॥ ७८ ॥

लोटोऽस्मद् इति वर्तते । लोटोऽस्मदः एकारस्यैकारादेशो भवति । निर्दिश्यमानस्यादेशोऽयमामोपवादः । करवै । करवावहै । करवामहै । चिनवै । चिनवावहै । चिनवामहै ।

ङितः सखम् ॥ ७९ ॥

अस्मद् इत्येव । ङितो लकारस्य योऽस्मत्तस्य सखं भवति । लङ् । अपचाव । अपचाम । लिङ् । पचेव । लुङ् । अपाक्ष्व । अपाक्ष्म । लृङ् । अपक्ष्याव । अपक्ष्याम ।

एर्मे ॥ ८० ॥

ङित इति वर्तते ङिल्लकारसम्बन्धिन इकारस्य खं भवति मविषये । लङ् । अपचः । अपचत् । अपचन् । लिङ् । पचेरन् । पचेत् । लुङ् । अपाक्षीः । अपाक्षीत् । लृङ् । अपक्ष्यः । अपक्ष्यत । अपक्ष्यन् । म इति किम् । अपचावहि । अपचामहि ।

मिप्थस्थतसोऽमृतंतताम् ॥ ८१ ॥

ङितां लकाराणां मिप् थस् थ तस् इत्येतेषां यथासंख्यं अम् तं त ताम् इत्येते आदेशा भवन्ति । अपचम् । अपचतम् । अपचतम् । अपचताम् । लिङ् । पचेयम् । पचेतम् । पचेत । पचेताम् । लुङ् । अपाक्षम् । अपाक्तम् । अपाक्त । अपाक्ताम् । वदव्रजेत्यादिनैप् । झलो झलीति सखम् । लृङ् अपक्ष्यम् । अपक्ष्यतम् अपक्ष्यत । अपक्ष्यताम् ।

लिङः सीयुट् ॥ ८२ ॥

लिङादेशानां सीयुडागमो भवति । मेयासुटो विधानाद्दे सीयुट् द्रष्टव्यः । टकारः टिदादिरिति विशेषणार्थः । उकार

च्चारणार्थः । पचेय । पचेवहि । पचेमहि । पचेथाः । पचेयाथाम् । पचेध्वम् । पचेत । पचेयाताम् । पचेरन् । रुदादेर्ग इति वर्तमाने लिङोऽनन्त्यसखमिति सीयुट्सकारस्य सुट्तथोरिति सुट्सकारस्य च खम् । आशिषि लिङ् । पक्षीय । पक्षीवहि । पक्षीमहि । पक्षीष्ठाः । पक्षीयास्थाम् । पक्षीध्वम् । पक्षीष्ट । पक्षीयास्ताम् । पक्षीरन् ।

### यासुण् भो ङित् ॥ ८३ ॥

लिङ इति वर्तते । लिङो मविषयस्य यासुडागमो भवति ङिच्च । सीयुटो ऽपवादोऽयम् । अत्र किदाशिषीति वचनात् विध्यादिलक्षणस्य लिङ इहोदाहरणम् । कुर्याम् । कुर्याव । कुर्याम । कुर्याः । कुर्यातम् । कुर्यात । कुर्यात् । कुर्याताम् । कुर्युः । कृञो ये च इति विकरणस्य खम् । झेर्जुसीति जुस् उसीति पररूपम् । स्थानिवद्भावादेव लिङादेशस्य ङित्वे सिद्धे यासुटो ङिद्वचनं ज्ञापकं लकाराश्रयमादेशानां ङित्वं टित्वं च न भवति तेन अचिनवमित्येप् सिद्धः । पचमाना स्त्री टित इति ङीत्यो न भवति ।

### किदाशिषि ॥ ८४ ॥

आशिषि लिङो यासुट् किद्भवति । ङित्वे प्राप्ते कित्वं विधीयते । ज्यर्थं जागर्तेरेवर्थं च । उद्यासम् । उद्यास्व । उद्यास्म । उद्याः । उद्यास्तम् । उद्यास्त । उद्यात् । उद्यास्ताम् । उद्यासुः । जागर्यासम् । जागर्यास्व । जागर्यास्म । जागुरविणिणल्ङितीत्येप् ।

### रन्नज्झेटः ॥ ८५ ॥

लिङादेशयोर्झ इट् इत्येतयोर्यथासंख्यं रन् अत इत्येतावादेशौ भवतः । पचेरन् । पक्षीरन् । झोन्त इत्यस्यायमपवादोऽयम् । पक्षीय । क्षीयाशीः प्रैषेषु मिङाकांक्षमित्येवमादिना प्राप्तस्य पत्य निवृत्त्यर्थं तपरकरणम् ।

सुट् तथोः ॥ ८६ ॥

लिङो यौ तकारथकारौ तयोः सुडागमो भवति । अग-
विषये लिङ् प्रयोजयति । गे सखेन भवितव्यम् । पक्षीष्टाः ।
पक्षीयास्थाम् । पक्षीष्ट । पक्षीयास्ताम् ।

झेर्जुस् ॥ ८७ ॥

लिङादेशस्य झेर्जुसित्ययमादेशो भवति । अन्तादेशाप-
वादः । कुर्युः । क्रियासुः । निर्दिश्यमानस्यादेशो न यासुटः ।

यवित्सेः ॥ ८८ ॥

यसंज्ञकलेत्तिसि इत्येतेभ्यः परस्य झेर्जुसादेशो भवति । ङित
इति वर्तते । तत्र लिङ आदेश उक्तः । लुङः स्येन व्यवधा-
नमस्ति लुङोपि सेरिति भविष्यति पारिशेष्याद्यविद्ग्रहणं
लङर्थम् । अबिभरुः । अजागरुः । उसीत्येप् । विदेः । अविदुः ।
अकार्षुः । अहार्षुः ।

आतः ॥ ८९ ॥

सेरिति वर्तते । आकारान्तात् सेः परस्य झेर्जुस् भवति ।
श्रुतिकृतं झेरातः परत्वं सेरुपि कृते त्याश्रयलक्षणेन सेः परत्वं
अत उभयगतमानन्तर्यं झेरस्ति । अस्थुः । अगुः । अयुः । अदुः ।
अधुः । त्याश्रयलक्षणेन झेरिति पूर्वेणैव सिद्धे नियमार्थमेतत् ।
अत एव सेरुपि कृते नान्यस्मात् अभूवन्निति ।

लङो वा ॥ ९० ॥

आत इति वर्तते । आकारान्तात्परस्य लङादेशस्य झेर्वा
जुस् भवति । अयुः । अयान् । अधुः । अधान् । ननु लङ्
ग्रहणमनर्थकम् । ङित इति वर्तते । पारिशेष्यात् लङ एव
संप्रत्ययः नानर्थकम् इह लङेव यो लङ् तस्य झेर्जुस् भवति ।

अतिदेशे मा भूत् । यान्तु । वान्तु । थवित्सेरित्यनेनापि मुख्यस्य लङो ग्रहणादिह न भवति । बिभ्यतु । जाग्रतु । विदन्तु ।

द्विषः ॥ ८१ ॥

लङो वेति वर्तते । द्विषः परस्य लङो झेर्वा जुस् भवति । अद्विषुः । अद्विषन् । अनिगन्तत्वाज्जुसीत्येप्न भवति ।

मिङ्शिद्गः ॥ ८२ ॥

मिङ् शितश्च तथा धोर्विहिताः गसंज्ञा भवन्ति । भूयते । नयति । रोदिति । शित् । पचमानः । गसंज्ञाश्रयो विकरण एप् भवति ।

शेषोऽग एव ॥ ८३ ॥

मिङ्शिद्भ्यामन्यः शेषः । धोरित्येवं विहितस्य शेषः अगसंज्ञ एव भवति । लविता । लवितुम् । लवितव्यम् । अगसंज्ञाकार्यमिडागम एप् च । धोरिति विशेषणं किम् । जुगुप्सते । श्रीकाम्यति । लूभ्याम् । अग्नित्वम् । एवकार उत्तरार्थः । अगप्रदेशाः । वलाद्यगस्येटगागयोरित्येवमादयः ।

लिट् ॥ ८४ ॥

एवशब्दोऽनुवर्तते । लिडादेशो मिङ् अगसंज्ञ एव भवति । पेचिथ । शेकिथ । वोपदेशइत्यादिनेट् । सेटीत्येवत्वम् । गसंज्ञासमावेशनिवृत्यर्थमेवकारोऽभिसंबध्यते । तेरिम इत्यत्र गसंज्ञायामसत्यां तदाश्रयः शप् न भवति ।

लिङाशिषि ॥ ८५ ॥

एवेति वर्तते । आशिषि यो लिङ् तदादेशश्चागसंज्ञ एव भवति । भावे जागरिषीष्ट । कर्मणि लविषीष्ट । अगसंज्ञायां

णाश्रयं लिङोनन्त्यत्वमिति त्वं न भवति । एवकाराधिकारात् णसंज्ञासमावेशो न भवति । यदि स्याद्यक् प्रसज्येत । आशिषीति किम् । जागृयात् । जागृयाताम् । जागृयुः ।

इत्यभयनन्दिविरचितायां जैनेन्द्रमहावृत्तौ
द्वितीयस्याध्यायस्य चतुर्थः पादः समाप्तः ।
समाप्तश्च द्वितीयोऽध्यायः ।



यत्किञ्चिद्वाङ्मयं लोके सान्वयं संप्रतीयते ।
तत् सर्वं धातुभिर्व्याप्तं शरीरमिव धातुभिः ।

॥ ओः ॥

# जैनेन्द्रव्याकरणस्य प्रस्तावः ।

भास्कराचार्यकृतलीलावत्यामन्ते

"अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः
षट् तर्कान् गणितानि पञ्च चतुरो वेदानधीते स्म यः ।
रत्नानां त्रितयं द्वयं च बुबुधे मीमांसयोरन्तरं
सद्ब्रह्मैकमगाधबोधमहिमा सोऽस्याः कविर्भास्करः॥" (१)

इति पद्यं दृष्ट्वा कान्यष्टौ व्याकरणानीति विवेचयन् कविकल्पद्रुमाभिधे धातुपाठे बोपदेवेनोक्तम्

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥"

इदं पद्यमवलोक्य एतान्येवाष्टौ व्याकरणानीति निश्चितवान् । ततो जैनेन्द्रव्याकरणमन्विष्यन् चिरेण वाराणस्यामेकस्य जैनस्य पुस्तकसंग्रहे देवनन्दिमुनिकृतस्य जैनेन्द्रव्याकरणस्याभयनन्दिमुनिकृतमहावृत्तिसहितस्यैकं पुस्तकमुपलब्धवान् किन्त्विदं पुस्तकं प्राचीनं [illegible]षु

(१) कलिकातास्थस्कूलबुक्सोसाइटीसमाजद्वारा मुद्रिते पुस्तके द्रष्टव्यम् । प्रक्षिप्तमिदं पद्यं न तु भास्कराचार्येण कृतमिति केचन मन्यन्ते । तथात्वे ऽपि केनचिद्बहुज्ञेन रचितमिति नास्त्यत्र शङ्कावकाशः ।

भूयो विलुप्ताक्षरमशुद्धिबहुलमपि चैकेनैवादर्शपुस्तकेन संशोधनं सम्यङ् न भवतीत्यपि सुनिश्चितमेव तथापि दुर्लभस्यास्य व्याकरणस्य सुलभत्वविधानाय सहसा तथाविधेनैव पुस्तकेन काशीविद्यासुधानिधौ मुद्रणेन प्रकाशयितुमयमारम्भः । अत्राननुभूतश्रमेणाहं याथातथ्येन शोधनकार्यं कृतवान् तदत्र स्खलितं विद्वद्भिः पुस्तकान्तर-संवादेन परिहरणीयं क्षन्तव्यं चेति भूयो भूयोऽभ्यर्थये इति शिवम् ।

गवर्नमेंटसंस्कृतकालेज<br>पुस्तकालय—बनारस<br>२६ मार्च १९१० ई०

विन्ध्येश्वरीप्रसादद्विवेदी ।



श्रीं नमः परमात्मने ।

# जैनेन्द्रव्याकरणम् ।

## देवनन्दिमुनिकृतम् ।

## अभयनन्दिमुनिकृतमहावृत्तिसहितम् ।

देवदेवं जिनं नत्वा सर्वसत्त्वाभयप्रदम् ।
शब्दशास्त्रस्य सूत्राणां महावृत्तिर्विरच्यते ॥ १ ॥

यच्छब्दलक्षणमसुव्रजपारमन्यै-
रव्यक्तमुक्तमभिधानविधौ दरिद्रैः ।
तत्सर्वलोकहृदयप्रियचारुवाक्यै-
र्व्यक्तीकरोत्यभयनन्दिमुनिः समस्तम् ॥ २ ॥

शिष्टाचारपरिपालनार्थमादाविष्टदेवतानमस्कारलक्षणं मङ्गलमिदमाहाचार्यः ॥

**लक्ष्मीरात्यन्तिकी यस्य निरवद्यावभासते ।**
**देवनन्दितपूजेशे नमस्तस्मै स्वयम्भुवे ॥ १ ॥**

लक्ष्मीः श्रीः सैव विशिष्यते ऽन्तमतिक्रान्तः कालोऽत्यन्तः तत्र भवा आत्यन्तिकी अविनश्वरी आत्मस्वभावाधीना केवलज्ञानादिविभूतिरित्यर्थः । अवद्यात् गर्ह्यान्निष्क्रान्ता निरवद्या निर्दोषा अवभासते शोभते यस्य भगवतः यस्येति सर्वनामपदस्य सामान्यवाचित्वेऽपि अभ्य-

प्रातिहार्यश्रीर्न सम्भवतीति पारिशेष्यादर्हद्भट्टारकस्य ग्रहणम्। यच्छब्दनिर्दिष्टोऽर्थस्तच्छब्देन परामृश्यत इति तस्मै देवनन्दितपूजेशे स्वयम्भुवे नमः अस्त्विवत्यध्याहारः देवाः सुराः तैर्नन्दिता अभिवर्द्धिता सा चासौ पूजा च तस्या ईष्ट इति क्विपि कृते देवनन्दितपूजेट् तथा स्वयमात्मना भवतीति स्वयम्भूः नमःशब्दयोगे सर्वत्र केर्भवति॥

लोके प्रसिद्धसाधुत्वानां शब्दानामन्वाख्यानार्थमिदमारभ्यते। अन्वाख्यानं च प्रकृत्यादिविभागेन सामान्यविशेषलक्षणेन शब्दानां व्युत्पादनम्। तच्च शब्दार्थसम्बन्धान्तरेण न सम्भवति। शब्दार्थसम्बन्धसिद्धिश्चानेकान्ताधीनेत्यत आह॥

## सिद्धिरनेकान्तात्॥ १॥

प्रकृत्यादिविभागेन व्यवहाररूपा श्रोत्रग्राह्यतया परमार्थतोपेता प्रकृत्यादिविभागेन च शब्दानां सिद्धिः अनेकान्ताद्भवतीत्यर्थोधिकार आशास्त्रपरिसमाप्तेर्वेदितव्यः। अस्तित्वनास्तित्वानेकत्वसामान्यसामानाधिकरण्य विशेषणविशेष्यादिकोऽनेकः अन्तः स्वभावो यस्मिन् भावे सोऽयमनेकान्तः अनेकात्मा इत्यर्थः। तस्यावग्रहेहावायधारणात्मकं प्रत्यक्षं तद्व्यवहारान्यथानुपपत्तेरितीदमनुमानं च साधकम्। अथास्तित्वनास्तित्वादीनां परस्परविरुद्धानां कथमैक्याधिकरण्यमसङ्कीर्णरूपता च। यथा भावाभावयोः हेतौ अन्वयव्यतिरेकयोः जनकयोरपि वा जन्यमानरूपरसापेक्षयोः सहकारित्वासहकारित्वयोः। अथ हेतौ सपक्षविपक्षापेक्षया रूपद्वयं रसे च सभागा-

सभागकार्यापेक्षया । अत्रापि तर्हि स्वरूपपररूपापेक्षया स्तित्वनास्तित्वे । द्रव्यपर्यायापेक्षया च नित्यत्वानित्यत्वे । द्रव्यपर्याययोश्चान्वयव्यतिरेकाभ्यां सिद्धिरित्यास्तां तावदेतत् । अनेकान्तादितीदमेव ज्ञापकं हेतौ क्वापि भवति । तेनानित्यः शब्दः कृतकत्वादित्यादि सिद्धम् । उत्तरसूत्रैकदेशाव्याचापोधिकार (?) इति वक्ष्यति । सस्थान-क्रियं स्वमिति । एतच्च वस्तुना साधर्म्यवैधर्म्यात्मकेऽनेकान्ते सत्युपपद्यते । तथाहि अकाराकारयोः ह्रस्वदीर्घकाल-भेदेन वैधर्म्येऽपि तुल्यस्थानकारणत्वेन साधर्म्यमस्तीति स्वसञ्ज्ञाव्यवहारः सिद्ध्यति । यदि हि साधर्म्यमेव स्यात् तदास्तित्वेनेवान्यैरपि धर्मैः साधर्म्ये वैधर्म्यं प्रसज्येत । यदि च वैधर्म्यमेव तदा कस्यचिदस्तित्वम-परस्य नास्तित्वमन्यस्य चान्यत् । अधुमृदिति अन्वय-व्यतिरेकाभ्यामर्थवच्छब्दरूपं मृत्सञ्ज्ञकमनेकान्तात् सि-द्ध्यति । तथाहि विभक्त्यन्तस्य च शब्दस्य प्रयोगादर्थे ज्ञानमुत्पद्यत इति सङ्घाता अर्थवन्तो दृष्टाः । तदवयवा-नामप्यन्वयव्यतिरेकाभ्यामर्थवत्ता जायते । वृक्षावित्यत्र विसर्जनीयाभावादेकत्वार्थो निवृत्तः । औकारभावाद् द्वित्वं जातम् । अकारान्तवृक्षशब्दान्वयाज्जातिरन्व-यिनी प्रतीयते । अन्वयव्यतिरेकौ च भावावेकान्तवादे न स्तः । तथाह्यपाये ध्रुवमपादानमित्यादिषट्कारकी नित्य-क्षणिकपक्षयोर्नोपपद्यते व्यपायध्रौव्याद्यभावात् । उक्तं च

इदं फलमियं क्रिया करणमेतदेष क्रमो
व्ययोऽयमनुषङ्गजं फलमिदं दशेयं मम ॥
अयं सुहृदयं [illegible]
विति प्रतिवितर्कयन् प्रयतते बुधो नेतरः ॥

## सस्थानक्रियं स्वम् ॥ २ ॥

स्थानं ताल्वादि क्रिया स्पृष्टतादिका समाना स्थाने क्रिया यस्य सामर्थ्यात् स्थानमपि समानं लभ्यते । अथवा समानं स्थानक्रियं यस्य समानस्येति योगविभागात् सादेशः । तत्स्थानक्रियं स्वसंज्ञं भवति । आत्मलाभमापद्यमाना वर्णास्तिष्ठन्त्यस्मिन्निति स्थानं वर्णोत्पत्तिस्थानमित्यर्थः । तदष्टविधम् ॥

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च ॥ इति

द्रव्यस्य देशान्तरप्राप्तिहेतुरान्तरः परिस्पन्दः क्रिया । सा चतुर्विधा । स्पृष्टता ईषत्स्पृष्टता विवृतता ईषद्विवृतता चेति । ध्वनावुत्पद्यमाने यया स्थानानि स्पृशति सा स्पृष्टता । मनाक्स्पर्शे ईषत्स्पृष्टता । दूरेण स्पर्शे विवृतता । समीपेन स्पर्शे ईषद्विवृतता । कस्य पुनः किं स्थानम् । अकुहविसर्जनीयाः कण्ठ्याः । हविसर्जनीयावुरस्यावेकेषाम् । जिह्वामूलीयो जिह्वयः ॥ सर्वं मुखस्थानमवर्णमेके मन्यन्ते । इचुयशास्तालव्याः । एदैतौ कण्ठतालव्यावेकेषाम् । उप्वोदौतावुपध्मानीया ओष्ठ्याः । ओदौतौ कण्ठोष्ठ्यावेकेषाम् । वकारो दन्तोष्ठ्यः । सृकस्थानमेके वाञ्छन्ति । ऋटुरषा मूर्द्धन्याः । रेफो दन्तमूल्य एकेषाम् । लृतु एकेषाम् । लृतुलसा दन्त्याः । नासिक्योऽनुस्वारः । यमङणनाः स्वस्थानाः । नासिकास्थाना एकेषाम् । तेषां स्वसञ्ज्ञाप्राप्तिर्दोषः । स्पृष्टिः स्पृष्टं स्पृष्टानुगतं करणं कृतिरुच्चारणमेषामिति स्पृष्टकरणा वर्गाः । ईषत्स्पृष्टकरणा अन्तस्थाः । ईषद्विवृतकरणा ऊष्माणः । विवृ-

तकरणाः स्वराः । तेभ्य एदोतौ विवृततरौ । तेन दध्येतत् मध्वोदनमिति स्वेऽको दीत्वाभावः । ताभ्यामैदौतौ विवृततरौ । तेन दिश्यैन्द्रयां मध्वौषधम् । ताभ्यामवर्ण इति । तेन पित्रर्थः दध्यत्र मध्वत्र। अन्ये संवृतमकारमिच्छन्ति लोके । शास्त्रव्यवहारे तु विवृतम् । एतच्चायुक्तं लोकशास्त्रयोरुच्चारणं प्रत्यविशेषात् । अयं च प्रपञ्चश्चिन्तनीयः । स्वरेभ्यो विवृततराः अवर्णश्च इत्यपि निर्देशे न दोषं पश्यामः । अ अ अ इत्यकारः उदात्तोऽनुदात्तः स्वरितः । स प्रत्येकं ङसञ्ज्ञकः । एवं प्रः । एवं दीः । एवं पः । एवं अष्टादशप्रभेदोऽवर्णः । तथा इवर्णः । तथा उवर्णस्तथा ऋवर्णः तथा लृवर्णः । कथं लृकारो द्विमात्रः अशक्तिजानुकरणापेक्षया । सन्ध्यक्षराणां प्रा न सन्ति । तान्यतो द्वादशप्रभेदानि । अन्तस्था यवला द्विप्रभेदाः । नासिक्येतरभेदात् । एवमर्थं चैतेऽण् सु पठ्यन्ते । अण् स्वं गृह्णातीति यथा स्यात् । रेफोष्मणां स्वा न सन्ति । वर्ग्यः स्ववर्ग्येण स्वसञ्ज्ञो भवति । उदाहरणं लोकाग्रम् । मुनीशः । स्थानग्रहणं किम् । कचटतपानां समानक्रियाणां भिन्नस्थानानां मा भूत् । तर्प्ता तप्तुमित्यत्र झरो झरि स्वे इति पकारस्य तकारे खं प्रसज्येत । क्रियाग्रहणं किम् । इचुयशानां समानस्थानानां भिन्नक्रियाणां मा भूत् । तत्र को दोषः अरुश्च्योततीत्यत्र झरो झरि स्वे इति शकारस्य चकारे खं प्रसज्येत । ऋकारलृकारयोः स्वसञ्ज्ञा वक्तव्या ॥ * ॥ पितृ लृकारः पितृकारः । स्वप्रदेशाः स्वेऽको दीरित्येवमादयः । शास्त्रलाघवार्थं संज्ञाकरणम् ॥

**हलोऽनन्तराः स्फः ॥ ३ ॥**

हलोऽनन्तराः विजातीयैरज्भिरव्यवहिताः सम्बन्धो

चारणाः स्फसंज्ञा भवन्ति । समुदायवाक्यपरिसमाप्तिराश्रीयते तेन प्रत्येकं स्फसञ्ज्ञा न भवति । हल इति जात्यपेक्षो बहुत्वनिर्देशः तेन द्वयोर्बहूनां च स्फसञ्ज्ञा । शर्मकर्मेति रमौ । इन्द्रश्चन्द्र इति नदराः । हल इति किम् । तितउः । तनेर्डउः सन्वच्चेति डउः । अत्राकारोकारावनन्तरौ ॥ स्फान्तत्वं प्रसज्येत । अनन्तरा इति किम् । पचति पनसम् । आद्यं रूपं प्रत्युदाहरणम् । पनसमित्यत्र स्फादेःस्कोऽन्ते चेति सत्वं स्यात् । स्फइति वर्णपिण्डेन सञ्ज्ञाकरणं किम् । एवंरूपः समुदायः स्फसञ्ज्ञो यथा स्यादित्येवमर्थम् । स्फप्रदेशाः स्फे रुः । लिङस्फात् किदित्येवमादयः ॥

## नासिक्यो ङः ॥ ४ ॥

नासिकायां भवो वर्णः ङः सञ्ज्ञो भवति । नासिकायाश्चावर्णनगरयोर्नसादेशो ये विहितः । ञमङणना उदाहरणम् । परस्परं स्वसञ्ज्ञा स्यात् इति चेत् नैवम् । स्वस्थानप्रभवा एवामी उपचारान्नासिक्यत्वम् । यथा मुखप्रभवोऽपि स्वर उपचाराद्वंशे भवो वंश्य इत्युच्यते । तथापि सति मुख्येऽनुस्वारे नासिक्ये कथमुपचरितग्रहणम् । तस्य ङसंज्ञायां प्रयोजनं नास्तीत्यग्रहणम् । ङसञ्ज्ञाकार्यं शान्तो दान्त इति ङस्य किझलोःक्ङितीति दीत्वम् । नासिक्य इति किम् । तप्तम् । अनुदात्तोपदेश इत्यादिना पुः खश्च प्रसज्येत । पक्वः पक्ववान् इत्यत्र ङस्य किझलोरिति दीत्वं स्यात् । वत्वस्य चासिद्धत्वात् अनुदात्तोपदेश इत्यादिना पुः खंच प्रसज्येत ॥

## अघु मृत् ॥ ५ ॥

घुवर्जितमर्थवच्छब्दरूपं मृत्सञ्ज्ञं भवति । घोरर्थ-

थतः पर्युदासाच्चार्थवत्त्वं लभ्यते । अर्थश्चाभिधेयो भावाभावरूपः । तत्र भावरूपो जातिगुणक्रियाद्रव्यभेदेन चतुर्विधः । गौः । शुक्लः । पाचकः । द्रव्यविवक्षायां जात्यादिनार्थवत्त्वम् । द्रव्याभिधाने तु द्रव्यगुणलिङ्गसंख्याकर्मादयः व्युपदिश्यन्ते । तेषां द्योतनार्थं टाबादयः स्वादयश्चोत्पद्यन्ते । एवं डित्थो डवित्थः । कुण्डं पीठम् । अभावरूपाभिधाने । अभावो विनाशः । शशविषाणम् । अध्विति किम् । अहन् । मृत्त्वे नत्वं स्यात् । पर्युदासादर्थवदिति किम् । धनं वनम् । नकारावधेर्मृत्सञ्ज्ञया नत्वं प्रसज्येत । लूः पूरिति क्व्यन्तस्य धुत्वेऽपि कृदन्तत्वात् मृत्सञ्ज्ञा । मृत्प्रदेशाः ङ्याम्मृद इत्येवमादयः ॥

## कृद्धृत्साः ॥ ६ ॥

कृदन्तं हृदन्तं ससञ्ज्ञकञ्च मृत्सञ्ज्ञं भवति ॥ कृत् । ज्ञाता । ज्ञातव्यम् । हृत् । प्राजापत्यः । आकम्पनिः । सः । जिनधर्मः । साधुवृत्तम् । सिद्धे सत्यारम्भो नियमार्थः । नियमश्च विधिमुखप्रतिषेधफलमिति त्यान्तेषु कृद्धृदन्तस्यैव मृत्संज्ञा । इह मा भूत् । असिचन् । अभवन् । उत्पन्नानां स्वादीनामेकत्वादिनियम इत्यस्मिन् दर्शने स्वाद्युत्पत्तिः स्यात् । इह च काण्डे कुड्ये रमते राजकुलमिति प्रो नपीति मृत्त्वात्प्रादेशः स्यात् । सग्रहणमपि नियमार्थम् । अर्थवत्संघातानां ससंज्ञकस्यैव मृत्संज्ञा वाक्यस्य मा भूत् । साधुर्धर्मं ब्रूते इति सुपो धुमृदोरिति सुपः उप्प्रसज्येत । सग्रहणात् तुल्यजातीयस्यैव सुबन्तसमुदायस्य वाक्यस्य निवृत्तिर्न प्रकृतित्यसमुदायस्य । तेन वा सुपो बहुःप्राक्तु इति वहौ के अकचि कृते बहुतृणं कुमारिका उच्चकैः पठतीति मृत्त्वं न निव-

तेते । ननु च सुप्तिङन्तं पदमित्यत्रान्तग्रहणादन्यत्र संज्ञाविधौ त्यग्रहणात्तदन्तविधिर्नास्तीत्युक्तं तत्कथं कृदन्तहृदन्तग्रहणम् । नायं संज्ञाविधिः पूर्वेण विहिताया: मृत्संज्ञायाः नियमोऽयम् । अथवा सादिति षत्व प्रतिषेधादिह तदन्तविधिर्ज्ञायते । अन्यथा सादित्येतस्य केवलस्य मृत्वेनाद्यत इत्यनेनैव प्रतिषेधः सिद्धः स्यात् । अथ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति कृद्ग्रहणं समुदायविध्यर्थं न नियमार्थम् । तेन देवदत्तेन कृतमित्यादेः समुदायस्य मृत्वात् सुपोधुमृदोरिति सुपः उप्प्रसज्यते । नैष दोषः । साधनं कृता बहुलमित्यस्यानर्थक्यप्रसङ्गात् । सर्वशब्दानां व्युत्पत्तिरस्तीति अस्मिन् पक्षे पूर्वसूत्रे नास्त्युदाहरणं संज्ञार्थमेव तत् ॥

## प्रो नपि ॥ ७ ॥

मृदिति वर्तमानमर्थात्तान्तं सम्पद्यते । प्रादेशो भवति नपि वर्तमानस्य मृदः । नबिति नपुंसकलिङ्गस्य संज्ञा पूर्वेषाम् । श्रियमतिक्रान्तं अतिश्रि । अतिरि । अतिवधु कुलम् । अतिनु जलम् । ईकारैकारौ तालव्यौ । ऊकारौकारौ च ओष्ठ्यावस्मादन्तरस्थानेऽन्तरतम इति परिभाषया अन्त्यस्याचः प्रादेशः । नपीति किम् । राजकुमारी । अग्रणीः । मृद इति किम् । रमते कुलम् । नन्वलिङ्गत्वादाख्यातस्यात्र प्रादेशाप्राप्तिरत एवात्रापि न प्रादेशः काण्डीभूतमिति । इह तर्हि मा भूत् काण्ड्यौ तिष्ठतः कुड्यौ तिष्ठत इति । अत्र मृदधिकारात् मृदमृदोरेकादेशो मृद्वन्न भवति ॥

## स्त्रीगोर्नीचः ॥ ८ ॥

न्यग्भूतो यः स्त्रीत्यः गोशब्दश्च तदन्तस्य मृदः

प्रादेशो भवति । स्त्री इति स्वरितचिन्हितनिर्देशात् स्त्रियामित्येवं विहितस्य ग्रहणम् । निष्कौशाम्बिः । निर्मथुरः । उभयगतिरिह शास्त्रे । तेन एकविभक्तित्वादप्रधानत्वाच्च शास्त्रीयं लौकिकञ्च न्यत्त्वं गृह्यते । त्यग्रहणे यस्मात्स तदादेरितीयं परिभाषा स्त्रीत्यग्रहणात् नेष्यते । तेन अतितिलपीडनिः । अतिराजकुमारिः । चित्रगुः स्वेतगुः चोक्तत्वादप्रधानत्वाच्च न्यत्वम् । स्त्री इति स्वरितचिन्हितग्रहणं किम् । अतिलक्ष्मीः । अतिश्रीः । नीच इति किम् । साधुविद्या । सुगौः । इह राजकुमारीपुत्रः सुगोकुलमिति यदपेच्चं न्यत्त्वं तत्प्रति तदन्तत्वं नास्तीति न प्रादेशः । मृद इत्यधिकारः किमर्थः । कुमारीपुत्रः गोकुलं वोक्तं न्यगिति प्रादेशः प्रसज्येत ॥ ईयसो वसे प्रतिषेधो वक्तव्यः ॥ * ॥ बह्व्यः श्रेयस्यो यस्य बहुश्रेयसी पुरुषः । विद्यमानश्रेयसी । सान्तो विधिरनित्य इति कन्मोरिनि कचपि न भवति ॥

## ह्रदुप्युप् ॥ ९ ॥

स्त्रीग्रहणं नीच इति चानुवर्तते । ह्रदुपि सति स्त्रीत्यस्य नीच उब्भवति ॥ आमलकम् । कुवलम् । बदरम् । आमलक्याः अवयवः फलं नित्यं दुशरादेरिति मयट् । इतराभ्यां प्राग् द्रारण् । तयोरुप्फल इत्युप् । स्त्रीत्यस्य पूर्व्वेण प्रादेशे प्राप्ते उबनेन क्रियते । तस्य परेऽचः पूर्व्वविधाविति स्थानिवद्भाव । यस्य ङ्यां चेत्यकारस्य खं प्राप्तमोविधिं प्रति स्थानिवद्भावप्रतिषेधान्न भवति । एवं पञ्चेन्द्रः । पञ्चशष्कुलः । पञ्चेन्द्राण्यो देवता अस्य ह्रदर्थइति षसःसंख्यादीरश्चेति रसंज्ञः प्राग्द्रोरण् तस्य रस्योवनपत्य इत्युप् । स्त्रीत्यस्योपि संन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव इत्यानुको निवृत्तिः । पञ्चभिः

शष्कुलीभिः क्रीतः आर्हादणः राटुबलावित्युप्। हृदिति किम्। गौरीपुत्रः। सुप उबन्त्र। उपोति किम्। गार्गीत्वम्। नोच इत्येव। अवन्ती कुन्ती कुरूः। अवन्तेरपत्यं स्त्री द्विकुरुनाथजादसाञ्यः इति ञ्यः। तस्य कुन्त्यवन्तीकुरुभ्यः स्त्रियामित्युप्। इतो मनुष्यजातेरिति ङी। ऊङुत इति ऊङ्। अत्र उपि सतीत्युच्यमाने प्रसज्येत॥

इद्गोण्याः॥ १०॥

इकारादेशो भवति गोण्या हृदुपि सति॥ पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः। आर्हादणो राटुबलावित्युपि कृते स्त्रीत्यस्य पूर्वेणापि प्राप्तेऽनेन इकारः। गोण्या इति सूत्रे प्रकृतप्रादेशेन सिद्धे इद्वचनं किम्। क्वचिदन्यत्रापि यथा स्यात्। पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः। सप्तसूचिः॥

आकालोऽच् प्रदीपः॥ ११॥

आ इति मात्रिकद्विमात्रिकत्रिमात्राणां संहितया निर्देशः। प्रदीप इति सूत्रेऽस्मिन्सुब्विधिरिष्ट इति जसः स्थाने सुः। अ आ अ ३ इत्येवं काल इव कालो यस्य सोऽच् यथासंख्यं प्रदीप इत्येवं संज्ञो भवति। अकालः। दधि। मधु। पितृ। आकालः। खट्वा। गौरी। वामोरूः। आ ३ कालः। आगच्छ भो माणव जिनदत्तान् इत्यादयः। कालग्रहणं प्रत्येकं परिमाणार्थम्। ततः अकाल इति विशेषणात् भिन्नकालयोर्दीपयोर्ग्रहणं न भवति। अज्ग्रहणं किमर्थम्। हलचां सङ्घातनिवृत्त्यर्थम्। प्रतद्य। तितउ च्छत्रमिति। प्रदीपप्रदेशाः प्रो नपीत्येवमादयः॥

अचश्च॥ १२॥

परिभाषेयम्। अचः स्थाने ते प्रदोपसंज्ञका भवन्ति॥

प्रोनपीति । अतिनु । अतिश्रि । इच्छातो विशेषणविशेष्य-भाव इति अजन्तस्य प्रादेशः । अच इति किम् । सुवाक्पू-तकुलम् । हलः प्रो न भवति । दीरकृद्वइति चीयते स्तूयते । अच इति किम् । भिद्यते । शमित्यामदोदीरित्यत्र गृह्यमा-णेन शमादिनाज्विशिष्यत इत्यनजन्तस्यापि दीत्वम् । शाम्यति । वाक्यटेः प इत्यत्रापि गृह्यमाणेन टिना अज्वि-शिष्यते । आगच्छ भो माणव जिनदत्तान् । अच इति किम् । धर्मवित् । तकारस्य मा भूत् । चकारः किमर्थः संज्ञाविधाने नियमार्थः । इह मा भूत । द्यौः पन्थाः स शुभ्यां शुभिः ॥

## उच्चनीचावुदात्तानुदात्तौ ॥ १३ ॥

अजितिवर्तते । उच्चैरुपलभ्यमानोऽच् उदात्तसंज्ञो भवति । नीचैरुपलभ्यमानोऽनुदात्तसंज्ञो भवति ॥ स्थानकृ-तमुच्चत्वं नीचत्वंच गुणः संज्ञिनो विशेषणम् । समान एव स्थाने ऊर्द्धभागनिष्पन्नोऽच् उदात्तसंज्ञो भवति नीचभा-गनिष्पन्नोऽनुदात्त इति ॥ नित्याः शब्दार्थसम्बन्धा इति यैरिष्यन्ते तेषां निरवयवस्य नित्यस्य शब्दस्य अवयवोप-चयापचयाभावात् उदात्तादिव्यपदेशो न घटते सावयव-त्वे च तेषामनित्यत्वं प्राप्नोति । न च नित्यस्य स्थानकार-णव्यापारविशेषाद्विशेषः प्रसज्यते । क्षणिकपक्षेऽपि नैका नित्या स्वरजातिरस्ति यामपेक्ष्यायमत्रोच्चैरयं नीचैरिति परस्परापेक्षो व्यवहारो भवेत् तस्मादुक्तमनेकान्तमाश्रि-त्योदात्तादयः समर्थनीयाः । न च लोकप्रतीतेषु शब्देषु विभागेनोदात्तादयः प्रतीयन्ते केवलं शास्त्रे व्यवहारार्थं प्रति संज्ञायन्ते । भू इति उदात्तत्वादिट भविता । एध स्पर्द्ध इत्येतयोरन्तोऽनुदात्तइति ङनुदात्तेतो द इति दो भवति ।

एधते । स्पर्द्धते । उदात्तानुदात्तप्रदेशेषु उच्चनीचगुणविशिष्टस्य ग्रहणं प्रत्येतव्यम् ॥

## व्यामिश्रः स्वरितः ॥ १४ ॥

उच्चनीचगुणव्यामिश्रोऽच् स्वरितसंज्ञो भवति ॥ पचयजइत्यन्तस्य स्वरितत्वात् अस्वरितेतःकर्त्रभिप्रायेफल इति दो भवति । पचे । यजे । स्वरितप्रदेशाः स्वरितेनाधिकार इत्येवमादयः ॥

## आदैगेप् ॥ १५ ॥

प्रत्येकवाक्यपरिसमाप्तिराश्रीयते । प्रत्येकमादैचां वर्णानामैबित्येषा संज्ञा भवति । पारिशेष्यात्संज्ञासंज्ञिसम्बन्धो ज्ञायते । तथाहि नानर्थकमिदमाचार्यप्रामाण्यात् । साधनानुशासनमपि न सम्भवति । आदैचां प्रत्याहारे उपदेशात् । ऐप्शब्दस्यापि मृत्संज्ञा सिद्धा । नापि पूर्वापरप्रयोगनियमार्थम् । सावैम्म इत्यन्यथापि प्रयोगदर्शनात् । स्थान्यादेशार्थमपि न सम्भवति । अवयात् रायोहलि नावोरात् मृजेरैविति च उभयदर्शनात् । लिङ्गाभावान्नागमागमिभावः । विशेषणविशेष्यभावोऽपि प्रतीतपदार्थयोर्भवति नीलोत्पलवत् । एवमन्यस्यार्थस्यासम्भवात् संज्ञासंज्ञिसम्बन्धः । लघ्वक्षरा संज्ञा । आदैचामैपा भावितानामतद्भावितानाञ्च सामान्येन ऐप्संज्ञा । तद्भावितानामुदाहरणम् । नाडायनः । दैवदत्तिः । औपमवः । अतद्भावितानाम् । मालामयम् । रैमयम् । नैमयम् । विकारार्थे नित्यं दुशरादेरिति मयट् । आदिति तपरकरणमैजर्थम् । तादपि परस्तपर इति । तेन तवैषा महौषधिरित्यादिषु त्रिमात्रचतुर्मात्राणां निवृत्तिः । आदैगैवित्यत्र सूत्रेऽस्मिन्

सुग्विधिरिष्ट इति जसः स्थाने सुः। ऐप्प्रदेशा मृजेरैबिति एवमादयः ॥

## अदेङप् ॥ १६ ॥

अदेङां वर्णानां प्रत्येकमेबित्येषा संज्ञा भवति ॥ अत्राप्यतद्भावितानां तद्भावितानामदेङामेप्संज्ञा । अतद्भावितानाम् । पचन्ति । पचे । एधन्ते । पद इति पररूपम् । तद्भावितानाम् । कर्ता । तरति । चेता । स्तोता । ऋकारस्यैवैपप्रसङ्गे स्थानतोऽन्तरतमौ अकारगकारौ भवतः। तौ च प्रसज्यमानावेव रन्तौ । अदिति तपरकरणं दीपनिवृत्त्यर्थं एङर्थं च । तेन मालेयं खट्वोढा ॥ त्रिमात्रचतुर्मात्राणां निवृत्तिः । एप्प्रदेशा मिदेरेबित्येवमादयः ॥

## इकस्तौ ॥ १७ ॥

परिभाषेयम् । ऐबेपौ संज्ञया विधीयमानौ इक एव स्थाने भवतः । स्थानिनियमोऽयं न विधिरिति । कुत एतत् । सवध्यस्थिदध्यदणामितीको निर्देशात् । एबैपोर्लक्षणान्तरेण विधानाच्च । प्रत्यासत्ते पूर्वमेबुदाहरणं वक्ष्यति । गार्गयोः । करोति । नयति । भविता । सार्वम्मो अकार्षीत् । अनैषीत् । अहार्षीत् । इच्छातो विशेषणविशेष्यभाव । मिदेरेबित्यत्र गृह्यमाणेन मिदादिना इग विशिष्यते । तेनानन्त्यस्य भवति । जुमि गार्गयोरिति च गृह्यमाणमिका विशिष्यते इतीगन्तस्य भवति । इक इति किम् । आत्सध्यक्षरव्यञ्जनानां मा भूत् । यानम् । ग्लायति । उम्भिता । अजित्यनुवर्तनादैबेपोः सम्बन्धे सिद्धे तौ ग्रहणं संज्ञाविधाने नियमार्थम् । द्यौः । पन्थाः । सः । यत्र स्थानी निर्दिश्यते तत्र नेदं व्याप्रियते । यथा ञ्णित्यच इति ॥

## न धुखे ऽगे ॥ १८ ॥

प्रतिषेधसामर्थ्यादेकदेशे धुर्वर्तते। धोः खं यस्मिन्नगे स धुखः। तन्निमित्तावेबैपौ न भवतः॥ लोलुवः। पोपुवः। मरीमृजः। यङन्तेभ्यः पचाद्यच् यङोऽचीति यङ् उप। अतः खात् प्रागेव च यङ उपेषितव्यः। अन्यथा देध इत्यत्र अखमजादेश इति कृत्वा तस्य स्थानिवद्भावात् दीङोऽचि क्ङिति युडिति युट् प्रसज्येत। धुग्रहणं किम्। लून्। लविता। खविधिर्बलवानिति प्रागेव धुसंज्ञाया अनुबन्धनाशः। अत्रागनिमित्तं खं नास्तीति ह्यङ्गवैकल्यं नाशङ्कनीयम्। यतो धुग्रहणे सति वसो लभ्यते धोः खं यस्मिन्निति। वसेन अग इत्यस्य विशेषणं किम्। क्नूयी। क्नोपयति। अत्र पुकमाश्रित्य यखं नागनिमित्तमिति न प्रतिषेधः। वसे तु प्रसज्येत। अग इति किम्। रोरवीति। गनिमित्त एऽभवत्येव। अत्रापि यङ्खमगनिमित्तं न भवतीति ह्यङ्गवैकल्यं न मन्तव्यम् यतो ऽगग्रहणे सति धुखनिमितत्वं लभ्यते इक इत्येव। अभाजि। रागः॥

## क्ङिति ॥ १९ ॥

गिति किति ङिति च निमित्तभूते यावेबैपौ प्राप्तुतस्तौ न भवतः॥ गिति। ग्लाभूजिस्थः ग्स्नुरिति। भूष्णुः। जिष्णुः। किति। चितम्। स्तुतम्। भिन्नम्। मृष्टम्। ङिति। चिनुतः। चिन्वेति। मृष्टः। मृजन्ति। इक इत्येव। कामयते। अचिनवमित्यत्र लङो ङित्वात्कस्मान्न प्रतिषेधः। सुभवत्योर्मिङिति अभूत्। भवतेर्हलादौ मिङ्येप्प्रतिषेधवचनं ज्ञापकं ङितो लकारास्यादेशो ङिन्न भवति इति। यासुटो ङित्करणंच ज्ञापकम्॥

## ईदूदेद् द्विर्दिः॥ २०॥

ईत ऊत् एत् इत्येवमन्तो यो द्विः स दिसंज्ञो भवति। अग्नी इति। वायू इति। खट्वे इति। तद्वदित्यनेन द्वेरद्वेश्चैकादेशो द्विग्रहणेन गृह्यत इतीदाद्यन्तश्च भवति व्यपदेशिवद्भावेन। मुख्यरूपेणायं द्विरेकारान्तः पचेते इति। पचेथे इति। सत्यां दिसंज्ञायां प्रकृत्याऽचि दिपा इति प्रकृतिभावः। ईदूदेदिति किम्। वृक्षावत्र। तपरकरणमसन्देहार्थम्। मणीवादिषु नेष्यते। मणीव। दम्पतीव। रोदसीव शोभेते। संज्ञाविधौ त्यग्रहणे तदन्तविधिर्नास्तीति अशुक्ले शुक्ले सम्पन्ने शुक्लयास्तां वस्त्रे इति त्यखे त्याश्रयन्यायेन दिसंज्ञा न भवति॥

## द्मः॥ २१॥

एदिति निवृत्तम्। दकारस्य स्थाने यो मकारस्तस्मात्परावीदूतौ दिसंज्ञौ भवतः। अमी आसते। अमी अत्र। अमू आसाते। अमू अत्र। बहावीरेत इति मत्वमीत्वं च। दादुर्दो मो ऽदसो ऽसेरिति मत्वम्। द्विमात्रस्य औकारस्य द्विमात्र ऊकारः। आश्रयात्मकारादीनां सिद्धिः। द इति किम्। सम्यत्र। दाडिम्यत्र। म इति किम्। द इति तानिर्देशपक्षे ते ऽत्रेत्यत्र दकारादेशस्य परेणादेपि कृते स्थानिवद्भावात्तद्वद्भावाच्च दिसंज्ञा प्रसज्येत। कानिर्देशपक्षे चतुःपद्यर्थ इत्यत्र स्यात्। ईदूदित्येव। इमे ऽत्र। एकयोगनिर्दिष्टानामेकदेशो ऽनुवर्तते निवर्तते चैकदेश इति। एद्ग्रहणं निवृत्तमिति। अन्यथा अमुके ऽत्रेत्यत्रानुवर्तनसामर्थ्यादुकारककाराभ्यां व्यवधाने ऽपि वचनप्रामाण्याद्दिसंज्ञा प्रसज्येत॥

## निरेकाजनाङ् ॥ २२ ॥

निसंज्ञ एकाजनाङ् दिसंज्ञो भवति ॥ अ अपेहि । इ इन्द्रं पश्य । उ अपसर । निरिति किम् । चकारात्र । अन्वयव्यतिरेकाभ्यां प्रकृतेस्त्यस्य च विभागः । अपायिना ह्यनुबन्धलिङ्गेन निरनुबन्धलिङ्गेन निरनुबन्धादकाराद्भियते णल् । एकश्चासावच्च एकाजिति किम । प्राश्नाति । अनाङिति किम् । आ उदकान्तात् । ओदकान्तात् । ङित्करणं किम् । एष्वर्थेषु ङिदयं वर्तते तत्र प्रतिषेधो यथा स्यादन्यत्र दिसंज्ञैव भवति ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

यथाक्रमम् । आ उष्णं ओष्णम् । आ इहि एहि । आ उदकान्तात् ओदकान्तात् । आ अर्भकेभ्यः आर्भकेभ्यः । आर्भकेभ्यो यशः प्रतीतम् । वाक्यपूरणे स्मरणे चार्थे ङित्वाभावादिसंज्ञा । आ एवं नु मन्यसे । आ एवं किल तत् ॥

## ओत् ॥ २३ ॥(१)

अनेकाजर्थ आरम्भः । ओदन्तो निर्दिसंज्ञो भवति । अहो इति । उताहो इति । अत्र ओदिति प्रधानं वचनात्तु प्रधानेनापि तदन्तविधिः । तेनेह लाक्षणिकत्वान्न भवति । अदो ऽभवत् । तिरो ऽभवत् । अनुपदेशे ऽदस्तिरोन्तर्द्धाविति निसंज्ञा इह तु गौणत्वान्न भवति । अगौगौः सम्पन्नो गो ऽभवत् । स्विधिडाजूर्यादिरिति निसंज्ञा । गौणत्वा-

(१) आदर्शपुस्तके २३, २४ सूत्रद्वयस्य विलुप्तत्वात्तदर्थानुसन्धानेनानुमितम् ।

ह्राहीके गोशब्दस्य कथमैवादिकार्यमिति चेत् ? सामान्येन संस्तुतस्य पदस्य प्रयोगाददोषः ॥

कौ वेतौ ॥ २४ ॥

किनिमित्तो य ओकारस्तदन्त इतौ परतो वा दिसंज्ञो भवति । पटो इति । पटविति । साधो इति । साधविति । काविति किम् । गवित्ययमाह । गौरिति वक्तव्यमशक्तया गो इत्युक्तमनुक्रियत अनेकान्ताश्रयणात् । अनुकार्यानुकरणयोरभेदविवक्षायामसत्यर्थवत्वे विभक्त्यनुत्पादः । इताविति किम् । पटो ऽत्र ॥

उञ् ॥ २५ ॥ (१)

उञित्येतस्य वा दिसंज्ञा भवतीतौ परतः । उ इति । विति । निरेकाजनाङिति नित्यं दिसंज्ञा प्राप्ता । सानुबन्धकनिर्देशः किमर्थः । अहो इति । उताहो इति । निसङ्घातपक्षे निरनुबन्धस्यास्य मा भूत् ॥

उञः ऊम् ॥ २६ ॥

उञः ऊमित्ययमादेशो भवतीतौ परतः । इति त्रिमात्रो नासिक्यो दिसंज्ञकश्च ऊँ इति यद्यपठितोऽपि निसंज्ञको ऽस्ति तस्यैतावेव प्रयोगो यथा स्यादित्यारम्भः ॥

दाधाम्बपित् ॥ २७ ॥

दा धा इत्येवं रूपा धवो भुसंज्ञका भवन्ति पितौ वर्जयित्वा । दारूपाश्चत्वारः । प्रणिददाति । दाण् । प्रणिदाता । प्रणिदयते । प्रणिद्यति । धारूपौ द्वौ । प्रणिदधाति ।

(१) आदर्शपुस्तके २५ । २६ इति सूत्रद्वयं विलुप्ताक्षरं तदर्थानुसन्धानेन कल्पितमादर्शान्तरसंवादेन परिशोधनीयम् ॥

प्रणिधयति । दैपः पित्करणं ज्ञापकम् । अत्र प्रतिपदोक्त-परिभाषा नाश्रीयते । भुसंज्ञाकार्यं नेर्गदनदेत्यादिना णत्वं भुमेत्यादिना हलीत्वं च । दीयते । धीयते । धीतं वत्सेन । अपिदिति किम् । दायते बर्हिः । अवदायते भाजनम् । भुप्रदेशाः भुस्थोरित्येवमादयः ॥

क्तक्तवतु तः ॥ २८ ॥

क्तश्च क्तवतुश्च तसंज्ञौ भवतः । रूपसंज्ञेयम् । कृतः । कृतवान् । भूत इति वर्त्तमाने न इति क्तक्तवतुरूपौ त्यौ भवतः । कारितः । कारितवान् । ते सेटीति णः खम् । भिन्नः । भिन्नवान् । द्रान्तस्य तो न इति नत्वम् । ककारः कित्का-र्यार्थः । उकार उगित्कार्यार्थः । तप्रदेशाः ते सेटीत्येव-मादयः ॥

संज्ञा खुः ॥ २९ ॥

संज्ञाशब्दवाच्योऽर्थः खुसंज्ञो भवति । खुप्रदेशाः खावन्यपदार्थ इत्येवमादयः ॥

भावकर्म्म ङिः ॥ ३० ॥

भावकर्म्मशब्दवाच्योऽर्थो ङिसंज्ञो भवति । ङिप्र-देशाः जिङावित्येवमादयः । तत्र भावकर्मणोर्ग्रहणं प्रत्ये-तव्यम् ॥

शि धम् ॥ ३१ ॥

शि इत्येतद्धसंज्ञं भवति । शि इति नपुंसके जसि-शसोरादेशस्यार्थवतो ग्रहणम् । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । धप्रदेशाः धेकावित्येवमादयः ॥

सुडनपः ॥ ३२ ॥

सुडिति प्रत्याहारेण स्वौजसमौटां ग्रहणम् । सुट् घसंज्ञो भवति नपुंसकलिङ्गादन्यस्य । राजा । राजानौ । राजानः । राजानम् । राजानौ । घेकाविति दीत्वम् । सुडिति किम् । राज्ञः पश्य । अनप इति किम् । सामनी । वेमनी । अनप इति पर्युदासात् स्त्रीपुंसम्बन्धिनः सुटो घसंज्ञा नपुंसके न विधिर्न प्रतिषेधः । तत्र पूर्व्वेण जसिशसोरादेशस्य शेर्घसंज्ञा भवत्येव । ननु व्यक्तं स्त्रीपुंसग्रहणमेव कर्त्तव्यम् । एवं तर्ह्यनप इति निर्देशात् सापेक्षस्यापि नसः सविधिर्भवतीति ज्ञाप्यते । तेन अश्राद्धभोज्यलवणभोजीत्येवमादयः सिद्धाः ॥

## कतिः संख्या ॥ ३३ ॥

कतिशब्दः संख्यासंज्ञो भवति । कतिकृत्त्वः । कतिधा । कतिकः । किं परिमाणमेषां किमः संख्यापरिमाणे डतिश्चेति डतिः । कति वारान् भुङ्क्ते । कतिभिः प्रकारैः । कतिभिः क्रीत इति । यथाक्रमं संख्याया अभ्यावृत्तौ कृत्त्वम् । संख्याया विधार्थे धा । संख्यायाः कोतिशत इति क इत्येते भवन्ति । ननु प्रदेशेषु संख्याग्रहणेनान्वर्थविज्ञानात् संख्यायतेऽनयेति कृत्वा कतिशब्दस्यापि ग्रहणे सिद्धे किमर्थमिदम् । नियमार्थम् । अनिर्ज्ञातेषु कतिशब्दस्यैव संख्यारूपता । तेन भूरिप्रभूतादीनां निवृत्तिः संख्यायाङ्गोऽबहुगणादित्यत्र बहुगणयोः प्रतिषेधाद्भवति संख्याग्रहणेन ग्रहणम् । बहुकृत्वः । गणकृत्वः । वैपुल्यसङ्घयोर्न संख्यात्वम् । वतोर्वेडिति वचनं ज्ञापकं भवति वत्वन्यस्य संख्याग्रहणेन ग्रहणम् । तावतिकः । तावत्कः । संख्याप्रदेशाः संख्यायाः कोऽतिशत इत्येवमादयः ॥

## ष्णान्तेल् ॥ ३४ ॥

कतिः संख्येति वर्त्तते । षकारनकारान्ता संख्या कतिशब्दश्च इल्संज्ञौ भवतः । ष्णान्तेति पदस्य संख्यापेक्षः स्त्रीलिङ्गनिर्देशः । कतेरनुवर्त्तनसामर्थ्यादिल्संज्ञा । षट् । पञ्च । सप्त । कति तिष्ठन्ति । उबिल इति जस उप् ष्णान्तेति संख्याविशेषणं किम् । विप्रुषः पामान इति अन्तग्रहणं वर्णनिर्देशेन संख्याप्रतिपत्त्यर्थमुपदेशिकार्थं च । तेन शतानीत्यादौ न भवति । इल्प्रदेशा उबिल इत्येवमादयः ॥

## सर्वादि सर्वनाम ॥ ३५ ॥

सर्वादयः शब्दाः प्रत्येकं सर्वनामसंज्ञा भवन्ति । सर्वे । सर्वस्मै । सर्वेषाम् । स्त्रियाम् । सर्वस्यै । विश्वे । विश्वस्मै । उभशब्दस्य सर्वनाम्नोभावेत्येवमर्थः पाठः । उभाभ्यांहेतुभ्यां उभयोर्हेत्वोर्वसति । द्विवचनटाप्परश्चायम् । उभौ पक्षौ । उभे कुले । उभे विद्ये । उभयस्मिन् । उभयेषाम् । जसि प्रथमचरमादिविकल्पात् पूर्वनिर्णयेनायमेव विधिः । उभये इति । डतरडतम इति त्यौ । कतरस्मै । इतर अन्य अन्यतर । इतरस्मै । अन्यस्मिन् । अन्यतरस्मै । त्वमित्ययं शब्दो ऽन्यवाची । त्वे । त्वेषाम् । नेम । नेमस्मिन् । जसि वक्ष्यमाणो विकल्पः । नेमे । नेमाः । समशब्दः सर्वशब्दार्थः स्वार्थे । समे । समस्मिन् । अन्यत्र यथासंख्यं समाः । समे देशे तिष्ठतीति भवति । सिमः । सिमस्मै । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अतरं बहिर्योगोपसंव्यानयोः । त्यद् तद् एतद् अदस इदम् एक द्विः । अत्वविधिं प्रति

धिपर्यन्ता त्यदादयः। युष्मद् अस्मद् भवत् किम् । त्यदादीनां यद्यत्परं तत्तदुभयवाचि । सर्वनामेत्यन्वर्थसंज्ञाविज्ञानात् संज्ञोपसर्जनानां न भवति । सर्वोनाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय। पूर्वपदात् स्वाञ्जग इति णत्वं न भवति । सर्वनामप्रदेशा आम्यात्सर्व्वनाम्न इत्येवमादयः ॥

## वा दिक्सवे ॥ ३६ ॥

दिगुपदिष्टे से वसंज्ञके सर्वादीनि वा सर्वनामसंज्ञकानि भवन्ति। न वे इति प्रतिषेधे प्राप्ते वचनम्। दक्षिणपूर्वस्यै दक्षिणपूर्वायै। उत्तरपूर्वस्यै। उत्तरपूर्वायै। दक्षिणस्याश्च दिशोर्यदन्तरालमिति प्रदाय दिशो ऽन्तराल इति वसः। सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः। उत्तरपदस्य स्त्रागोर्नीच इति प्रः। पुनष्टाप। प्रतिपदोक्तस्य दिक्सस्य ग्रहणादिह नास्ति विकल्पः। दक्षिणैव पूर्वा अस्य मुग्धस्य दक्षिणपूर्वाय देहि । दक्षिणा च सा पूर्वा च सा अस्मिन्नपि विग्रहे परत्वाद्दिशो ऽन्तराले इतीयं प्राप्तिर्न राज्ञा दण्डवारितेति कर्तव्यमेवेदं सूत्रम्। दिग्ग्रहणं किम्। न वे इति प्रतिषेधं वक्ष्यति तस्य प्रतिषेधस्यास्य च विकल्पस्य विषयज्ञापनार्थम्। सग्रहणं किम्। साधिकारविहिते वसे विकल्पो यथा स्यादातिदेशिके मा भूत। दक्षिणदक्षिणस्मै देहि। आबाध इति द्वित्वम्। ववदतिदेशश्च न व इत्यत्रापीदं सग्रहणमनुवर्तते नापि न प्रतिषेधः। वग्रहणं किम्। दक्षिणोत्तरपूर्वाणाम्। द्वन्द्वे विकल्पो मा भूत्। ननु प्रतिपदोक्तस्य ग्रहणमत्रोक्तं ततो द्वन्द्व इत्येव प्रतिषेधः सिद्ध उत्तरार्थं तर्हि वग्रहणम् ॥

## न वे ॥ ३७ ॥

वसे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । दूव्यन्याय त्र्यन्याय । सव्वनामसंख्ययोरिति वक्तव्ये न पूर्वनिपातः संख्यायाः । एवं प्रियविश्वाय । प्रियोभाय । इदमेव प्रतिषेधवचनं ज्ञापमत्र तदन्तविधिरस्तीति । तेन परमसर्वस्मै इत्यत्रापि सर्वनामसंज्ञा । ननु सर्वनामसंज्ञायामन्वर्थविज्ञानात्संज्ञोपसर्जननिवृत्तिरुक्ता सर्वोपसर्जनश्च वस इति सर्वनामसंज्ञायाः प्राप्त्यभावात्सूत्रमिदमनर्थकम् । नानर्थकमेतत् प्रयोजनसद्भावात् । त्वकं पिताऽस्य अहकं पिताऽस्य त्वत्कपितृकः । मत्कपितृकः । वसावयवस्य सर्वनामसंज्ञाविरहादग्मा भूत् । कुत्साद्यर्थे के परतस्त्येदवोश्चेति त्वमादेशौ स इत्येव । एकैकस्मिन् । एकोववद्वदित्यातिदेशिके वसे प्रतिषेधो मा भूत् । वाधिकारे पुनर्वग्रहणंवसगर्भे द्वन्द्वे ऽपि नित्यप्रतिषेधार्थम् । वस्त्रान्तरगृहान्तरा इति ॥

## भासे ॥ ३८ ॥

भासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय । संवत्सरपूर्वाय । मासेन पूर्वः । पूर्वावरसदृशादिसूत्रेण भासः । स इतिवर्त्तमाने पुनः सग्रहणं भासार्थे वाक्ये ऽपि तत्संज्ञाप्रतिषेधार्थम् । मासेन पूर्वाय । मुख्ये च पूर्वावरेत्यादिभासे यद्वाक्यं तत्र प्रतिषेधो न साधनं कृता बहुलमिति भासे । त्वयका कृतम् । मयका कृतम् । अन्यथा त्वत्केन कृतं मत्केन कृतमित्यनिष्टं स्यात् । त्वयका मयकेति पूर्वं त्वमादेशौ ततः सुवन्तादक् । तथाह्यग्विधौ वक्ष्यति मृदः सुप इति यदूद्वयमपीहा-

नुवर्त्तते। अभिधानतश्च व्यवस्था। तत्र मृतः प्राक् टेरग्भवति। युष्मकाभिः। अस्मकाभिः। युष्मकासु। अस्मकासु। युवकयोरावकयोरिति। क्वचित्तु सुबन्तस्यटेः प्राक्। त्वयका। मयका। त्वयकि। मयकि॥

## द्वन्द्वे ॥ ३९ ॥

द्वन्द्वे से सर्वादिनि सर्वनामसंज्ञानि न भवन्ति। कतरकतमाय। कतरकतमात्। कतरकतमानाम्॥

## वा जसि ॥ ४० ॥

द्वन्द्वे से सर्वादयः सर्वनामसंज्ञा वा भवन्ति। कतरकतमे। कतरकतमाः। पूर्वेण नित्यप्रतिषेधः प्राप्तः। जसीत्याधारनिर्देशाज्जसि कार्यं शीभावो विभाष्यते। अक्तु पूर्वेणैव प्रतिषिद्धः। यदि जसि परतस्तत्संज्ञाविकल्पेत तदा संज्ञापत्ते ऽग्भवेत्। कतरकतमके इत्यनिष्टं प्रसज्येत। कुत्साद्यर्थविवक्षायां तु के सति तेन व्यवधानान्न शीभावः। अतः कतरकतमाका इति सिध्यति। न च के ऽपि सति स्वार्थे कस्य प्रकृतिग्रहणेन ग्रहणमन्यथा सर्वादौ डतरडतमग्रहणमनर्थकं स्यात् सर्वनाम्न एव तयोर्विधानात्॥

## प्रथमचरमतयाल्पार्द्धकतिपयनेमाः ॥ ४१ ॥

प्रथमादयः शब्दाः जसि वा सर्वनामसंज्ञा भवन्ति। प्रथमे। प्रथमाः। चरमे। चरमाः। तय इति त्यग्रहणं तेन वचनात्संज्ञाविधावपि तदन्तविधिः। द्वाववयवावेषामिति द्वितये। द्वितयाः। संख्याया अवयवे तयडिति तयट एकदेशविकृतस्यानन्यत्वाद्विकल्पः। द्वये। द्वयाः। उभये। अमुभयशब्दः सर्वादित्वान्नित्यं सर्वनामसंज्ञः।

गुपू धूप विच्छि पणि पनि इत्येतेभ्यो धुभ्य आयो भवति । गोपायति । धूपायति । विच्छेरन्तरङ्गत्वात्तुकि कृते आयः । विच्छायति । अनुदात्तेत्त्वं केवले चरितार्थमिति दो न भवति । गुपादिभिर्भौवादिकैः साहचर्यात्पणेर्भौवादिकस्य ग्रहणं न तौदादिकस्य शतस्य पणते व्यवहृपणेः सामर्थ्य इति कर्म्मणि ता । पनिरिहैव पणिना समानार्थः उपदिश्यते । पनायति ॥

## वाऽगे ॥ २७ ॥

अगविषये गुपादिभ्यो वा आयो भवति । गोपायिता । गोप्ता । गोपायांचकार । जुगोप । गोपाया । गुप्तिः । इत्येवमादि योज्यम् ॥

## कमृत्योर्णिङीयङ् ॥ २८ ॥

सूत्रत्वात्कायाः स्थाने ता कृता । कम् ऋति इत्येताभ्यां णिङ् ईयङ् इत्येतौ त्यौ भवतः । कामयते । णकारः ऐवर्थः । न कम्यमिचमामित्यत्र कमेर्मित्संज्ञाप्रतिषेधः किमर्थः इणमोर्दीर्मितामिति वा प्रादेशो मा भूदित्येवमर्थः । अकामि । कामं कामम् । वा ग इति णिङोऽनुत्पत्तौ णिज्निमित्तस्यैपः प्रादेशनिवृत्त्यर्थश्च ङकारो दविध्यर्थः । ङ्कितोत्येप्प्रतिषेधार्थं न भवति इकस्तत्रानुवृत्तेः ऋतिरिहैव घृणार्थमुपदिश्यते ऋतीयते । वाग इति च वर्तते । तेन कमिता । कामयिता । अर्तिता । ऋतीयिता ॥

## तदन्ता धवः ॥ २९ ॥

येऽनुक्रान्ताः सनादयस्ते अन्ता येषां ते धुसञ्ज्ञका भवन्ति । तथा चैवोदाहृतम् । पदसंज्ञायामन्तग्रहणं निय-

मार्थमुक्तम् । अन्यत्र संज्ञाविधौ त्यग्रहणे तदन्तविधिर्नास्ति इति एष प्रतिषेधो मा भूदित्यन्तग्रहणम् ।

### स्यतासी लृलुटोः ॥ ३० ॥

लृ इति लृङ्लृटोः सामान्येन ग्रहणं धोः स्यतासी इत्येतौ मध्ये त्यौ भवतः लृलुटोः परतः । शब्दापेक्षमत्र यथासंख्यम् । धोरधिकरात् पूर्वभक्ततानिवृत्तिः अगासंज्ञा च भावकर्मकर्तृषु लो विहितः । तत्र यक्सपावुत्सर्गौ स्यादयस्तदपवादाः । करिष्यति । अकरिष्यत् । कर्ता । तासेरिदित्करणं किम् । हलुङ्ञिजत्यनिदित इति नखप्रतिषेधार्थम् । हन्ता । मन्ता ॥

### कास्यनेकाजत्याल्लित्याम् ॥ ३१ ॥

कासेरनेकाजस्त्यान्ताच्च लिटि परतः आम्भवति । कासाञ्चक्रे । अनेकाज्भ्यः चकासाञ्चकार । चुलुम्पाञ्चकार । दरिद्राञ्चकार । त्यान्तात् लोलूयाञ्चक्रे । कारयाञ्चक्रे । गवाञ्चकार । आचारार्थे मृद्भ्य इति क्विप् । अनेकाज्ग्रहणमत्यान्तार्थम् । आमिति नायमागमः । कासेर्विधानात् ॥

### सरोरिजादेः ॥ ३२ ॥

सह रुणा वर्त्तते इति सरुः । सरोरिजादेर्धोः लित्याम्भवति । ईहाञ्चक्रे । इन्दाञ्चकार । उपदेशावस्थायां नुम् । ऊहाञ्चक्रे । उब्छाञ्चकार । उदम्भाञ्चकार । सरोरिति किम् । इयेष । उवोष । एपि कृते सरुरिति चेत् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति । इजादेरिति किम् । ततक्षऋच्छत्यृतामिति लिङ्गोपवचनं ज्ञापकं ऋच्छेराम्न भवति । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः,

कथं प्रोर्णुनाव । वाच्य ऊर्णोर्णुवभ्दावो यङसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेण्णिवृत्तये । प्रोर्णुनूषति । सनिग्रहश्चेतिट्प्रतिषेधः ।

दयायासः ॥ ३३ ॥

दय अय आस इत्येतेभ्यश्च लिटि आम्भवति । दयाञ्चक्रे । पलायाञ्चक्रे । गेरयताविति लत्वम् । आसाञ्चक्रे ॥

वोषजागृविदात् ॥ ३४ ॥

उष जागृ विद् इत्येतेभ्यो लिटि परतो वा आम् भवति । उषाञ्चकार । उवोष । जागराञ्चकार । जजागार । विदाञ्चकार । विवेद । विदेराम्यकारान्तत्त्वं निपातनात् एन्न भवति । जागृसाहचर्याददादिकस्य ग्रहणम् ॥

भीह्रीभृहुवामुज्वत् ॥ ३५ ॥

भी ह्री भृ हु इत्येतेभ्यो लिटि आम् भवति उचीव कार्यं भवत्येषामुचि कार्यं द्वित्वमित्येव तदतिदिश्यते । लिडपेक्षं द्वित्वमामा व्यवधानान्न प्राप्नोति । बिभयाञ्चकार । बिभाय । जिह्रयाञ्चकार । जिह्राय । बिभराञ्चकार । बभार । भृञ न्त्रयाणामिति चस्येत्वम् । जुहवाञ्चकार । जुहाव ॥

लिड्वत् कृञि ॥ ३६ ॥

कृञिति प्रत्याहारेण कृभ्वस्तीनां त्रयाणां ग्रहणं मण्डूकप्लुत्या वेति विभाषापेक्षणीया तेन सम्पदो वहिर्भावः । य उक्त आम् लिड्वत्कृञ प्रयुक्ते साधुर्भवति लिड्वत् कृञोतीन्निर्देशात् आमन्तस्याव्यवहितस्य पूर्वं प्रयोगः । ईहाञ्चक्रे । आम्वत् कृञ इति दः । ईहाम्बभूव । ईहः

मास। अस्तिब्रूओर्भूवचीत्यत्रोक्तमस्तेरनुप्रयोगस्य भूभावो न भवति। कृञि प्रत्याहारग्रहणसामर्थ्याद्वा॥

## विदाङ्कुर्वन्तु वा॥ ३७॥

विदाङ्कुर्वन्त्विति एतद्वा निपात्यते किमत्र निपात्यते लोटि वा आम् एवभावो लोडन्तस्य करोतेरनुप्रयोगश्च निपात्यते। विदाङ्कुर्वन्तु। विदन्तु। सर्वेषु लोड्वचनेषु निपातनमिदं प्रायेण ल्यन्तस्य प्रयोगान्तेन निर्देशः। विदाङ्करवाणि। वेदानि। विदाङ्करवाव। वेदाव। वेदाङ्करवाम। वेदाम। विदाङ्कुरु। विद्धि। विदाङ्कुरुतम्। वित्तम्। विदाङ्कुरुत। विदाङ्करोतु। वेत्तु। विदाङ्कुरुताम्। वित्ताम्॥

## सिर्लुङि॥ ३८॥

धेः सिर्भवति लुङि परतः। अकार्षीत्। अभैत्सीत्। अकृषातां कटौ देवदत्तेन। इदित्करणं किम्। अमंस्त। अनिदित इति प्रतिषेधात् नोङः खं न भवति॥

## स्पृशमृशकृषतृपदृपो वा॥ ३९॥

स्पृश मृश कृष तृप दृप इत्येतेभ्यो लुङि वा सिर्भवति। तृपिदृप्योर्पुषादित्वान्नित्यमङ् प्राप्तः। अन्यत्र शल इति क्सः। अस्प्राक्षीत्। अस्पार्क्षीत्। वानुदात्तस्य ईङ इति वामागमः। यणादेशे कृते वदव्रजहलो इत्यैप्। पक्षे अस्पृक्षत्। अम्राक्षीत्। अमार्क्षीत्। अमृक्षत्। अक्राक्षीत्। अकृक्षत्। अत्राप्सीत्। अतार्प्सीत्। अतृपत्। अद्राप्सीत्। अदार्प्सीत्। अदृपत्॥

## इगुङः शलोऽनिटोऽदृशः क्सः ॥ ४० ॥

इगुङ् शलन्तो यो धुः अनिट् तस्माद्दृशिवर्जितात् भृङि क्सो भवति । दिह । अधिक्षत् । दुह । अधुक्षत् । लिह अलिक्षत् । इगुङः इति किम् । दह । अधाक्षीत् । शल इति किम् । अभैत्सीत् । अनिट इति किम् । अकोषीत् । नेटी-त्यैप्रतिषेधः । अदृश इति किम् । अदर्शत् । अद्राक्षीत् । वेरित इत्यङ् ।

## श्लिषः ॥ ४१ ॥

अनिट इत्यधिकारात् श्लिष दाहे इत्यस्य ग्रहणं न भवति । श्लिषः क्सो भवति लुङि परतः । अश्लिक्षत । पूर्वेण प्राप्तस्य बाधके पुषादित्वादङि प्राप्ते अयमारम्भः । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानि-त्यङ एव बाधा न ञेः । आश्लेषि ॥

## स्वार्थे ॥ ४२ ॥

स्वार्थः आलिङ्गनं श्लिषः स्वार्थ एव क्सो भवति । आश्लिक्षत् कन्यां देवदत्तः । स्वार्थ इति किम् । समाश्लिषत् जतु च काष्ठं च । दविषये सिद्धे समाश्लिष्टस्त्वं धवखदिरेण । झलो झलीति सेः खम् ॥

## णिश्रिद्रुस्रुकमेः कर्त्तरि कच् ॥ ४३ ॥

णिजन्तेभ्यः श्रि द्रु स्रु कमि इत्येतेभ्यः कर्तृवाचिनि लुङि कज्भवति । ककारः कित्कार्यार्थः । चकारः लुङि कचि धोरिति विशेषणार्थः । अचीकथत् । अपीपचत् । ओ-नयत्यादेः कच्प्रतिषेधो वक्तव्यः । औनयीत । अशिश्रियत् ।

अडुद्रुवत् । कमिग्रहणं वाग इति यदा णिङ् न भवति तदा प्रयोजयति अचकमत । अकः स्वं यस्मिन् णाविति तत्र विग्रहात् सन्वद्भावो न भवति । णिङ्पक्षे सन्वद्भावः । अचीकमत् । आत्मकर्मणापि चङ् भवति । अचीकरत कटः स्वयमेव । णिश्रिश्रथिग्रन्थब्रूआन्दविधौ धीनाञ्चेति ञियकाः प्रतिषेधं वक्ष्यति ।

## वा धेट्श्व्योः ॥ ४४ ॥

धेट् श्वि इत्येताभ्यां वा कङ्भवति कर्तरि लुङि परतः । अदधत् । द्वित्वे ऽचोत्यात्वस्य स्थानिवद्भावाद् द्वित्वं यदा सिस्तदा वा घ्राधेट्च्छासास इति वा सेरुप् । अधात् । अधासीत् । अनुपि यमरमनमातः स्कति सगिटौ । अशिश्वियत् । नञौ ञिरित्यत्रेकारप्रश्लेषात् ञिप्रतिषेधः । कचा मुक्ते पक्षे जॄश्विइत्यादिना विकल्पेनाङ् । अश्वत् । अश्वयीत् । ह्म्यक्षणेत्यादिना सावैप्प्रतिषेधः । कर्तरीत्येव । अधिषातां वत्सेन ॥

## वक्त्यसुख्यातेरङ् ॥ ४५ ॥

वक्ति असु ख्याति इत्येतभ्यो लुङि परतः अङ् भवति । इदमेव वक्तिवचनं ज्ञापकं गेपि ब्रूञो वचिरादेशो भवतीति । अवोचत् । अवोचत । अस्यत्यवोथुक्पुमुमो०च्छी-त्युमागमः । अस् । उदास्थत । उदास्थेताम् । उदास्थन्त । अगेरत्यूस्यह्योर्वचनमिति दः । मविषये पुषादित्वादेवाङ् सिद्धः । ख्यातिरिति ख्या प्रकथन इत्यस्य चक्षादेशस्य च कृतयकारस्याविशेषेण ग्रहणम् । आख्यत् । आख्यताम् । आख्यन् ॥

## ह्वालिप्सिचः ॥ ४६ ॥

हा लिप् सिच् इत्येतेभ्यश्चाङ् भवति लुङि परतः । आह्वत । अलिपत् । असिचत् । पृथगारम्भ उत्तरार्थः ॥

दे वा ॥ ४७ ॥

हा लिप सिच् इत्येतेभ्यो लुङि दे वा अङ् भवति । आह्वत । आह्वास्त । अलिपत । अलिप्त । असिचत । असिक्त । शिलिङ्द इति कित्त्वादेप्प्रतिषेधः । पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् ॥

द्युत्पुषादिॢदित्सर्तिशास्त्यर्तेर्मे ॥ ४८ ॥

द्युतादिभ्यः पुषादिभ्यः ॢकारेद्भ्यः सर्ति शास्ति अर्ति शा इत्येतेभ्यश्च लुङि मे परतः अङ् भवति । वेति नानुवर्तते । द्युतादयः कृपूपर्यन्ताः । व्यद्युतत् । व्यलुटत् । अश्वितत् । द्युद्भ्योलुङीति वामम् । पुषादयः आगणपरिसमाप्तेः । अपुषत् । असुषत् । क्मः प्राप्तः । ॢकारेद्भ्यः । आपत् । अगमत् । अशकत । असरत् । असिषत् । म इति किम् । व्यद्योतिष्ट । व्यत्यपुक्षत् । अर्तेरपि दविषये मा समृषातां मा समृषत ।

वेरितः ॥ ४९ ॥

म इति वर्त्तते । इरशब्देतो धोर्वाङ भवति लुङि मे परतः । अरुधत् । अरौत्सीत् । अभिदत् । अभैत्सीत् । म इत्येव । अरुद्ध । अभित्त ॥

जॄश्विस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचः ॥ ५० ॥

वेति वर्तते । जॄ श्वि स्तम्भु म्रुच म्लुचु ग्रुचु ग्लुचु इत्येतेभ्यः कर्त्तरि लुङि वाङ् भवति । जॄष् । अजरीत् । अजारीत् । अङि ट्टसुरेवित्येप । अश्वत् । अश्वयीत् ।

कजपि विभाषितः । अशिश्रियत् । स्तम्भुरिहैवोपदिष्टः । अस्तभत् । अस्तम्भीत् । न्यम्रुचत् । न्यम्रोचीत् । न्यम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् । अग्लोचीत् । अम्लुचन् ग्लुच्वोर्नोडोग्रहणमनर्थकम् । अयक्षे विशेषाभावात् नादृग्रहणसामर्थ्यान्नत्वं न भवति इत्यपि न युक्तं न्यग्लुच्वदिति लङा सिद्ध्यति ॥

## ञिस्ते पदः ॥ ५१ ॥

वेति निवृत्तमुत्तरत्र वाग्रहणात् । कर्त्तरीति वर्तते पदेर्धोर्लुङि ते परतः ञिर्भवति । उदपादि भैक्षम् । समपादि शस्यम् । त इति किम् । उदपत्सातमाम् । उदपत्सत ॥

## दीपजनबुधपूरितायिप्यायो वा ॥ ५२ ॥

दीपादिभ्यः लुङि ते परतः वाञिर्भवति । अदीपि । अदीपिष्ट । अजनि । अजनिष्ट । ञौ जनिवध्योरित्यैप्प्रतिषेधः । साहचर्याद् बुधेरनुदात्तेतो ग्रहणम् । अबोधि । अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । अयं कर्तरि विकल्पः । अन्यत्र ञिङौ वित्यनेन नित्यो ञिः ॥

## कर्मवद्यात्मनि ॥ ५३ ॥

आत्मशब्देन कर्त्ताभिप्रेतः । यदा सौकर्यात् कर्म कर्तृत्वेन विवक्ष्यते तदा कर्मणि आत्मनि विहिते तशब्दे परतः वा ञिर्भवति । अकारि कटः स्वयमेव । अकृत कटः स्वयमेव । उरिति सेः कित्त्वम् । अलावि केदारः स्वयमेव । अलविष्ट केदारः स्वयमेव । ञिङौविति नित्ये ञौ प्राप्ते विकल्पोऽयम् । आत्मकर्मणीति किम् । अकारि कटो देवदत्तेन ॥

दुहश्च ॥ ५४ ॥

चशब्दो विकल्पानुकर्षणार्थः । दुहेर्वा ञिर्भवति तशब्दे परत कर्मण्यात्मनि । नियमोऽयं हलन्तेषु दुहेरेव विकल्पः तेन पूर्वसूत्रे अजन्तेषु विकल्पो द्रष्टव्यः । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव । वोप् दुहदिहलिहगुहो दे दन्त्य इति क्सस्योप् । आत्मकर्मणीत्येव । अदोहि गौर्गोपालकेन ।

न रुधः ॥ ५५ ॥

ञिडीविति प्राप्ते प्रतिषेधोऽयम् । भावे कर्मण्यात्मनि ञिर्न भवति । अन्ववरुद्ध गौः स्वयमेव ॥

तपोऽनुतापे च ॥ ५६ ॥

तपतेरनुतापे च कर्मण्यात्मनि च ञिर्न भवति । अनुतापः पश्चात्तापः तत्र तावत् भावकर्मणोरनुपि प्रतिषेधः । अन्ववतप्त पापेन कर्मणा । कर्मण्यात्मनि । अतप्त तपः स्वयमेव साधुना । साधुस्तावदुपवासादिलक्षणं तपस्तप्यते । तद्यदा सौकर्यात् कर्तृत्वेन विवक्षितं तदाऽयं प्रयोगः ॥

यग् दुहः ॥ ५७ ॥

नेति वर्तते । दुहेः कर्मण्यात्मनि यङ् न भवति । दुग्धे गौः स्वयमेव । लुङि अदुग्ध गौः स्वयमेव ॥

नमः शप्तु ॥ ५८ ॥

नमः कर्मण्यात्मनि यङ् न भवति शप् तु भवति । नमते दण्डः स्वयमेव । अनमत दण्डः स्वयमेव । कर्तर्यगः शप्त स्यात् ॥

## स्तोश्च ञिश्च ॥ ५६ ॥

स्तोश्च नमश्च कर्मण्यात्मनि ञिर्यग् च न भवतः। प्रास्तोष्ट गौः स्वयमेव। प्रस्तुते गौः स्वयमेव । लङि प्रास्तुत गौः स्वयमेव । ञिप्रतिषेधार्थं नमो ऽनुकर्षणम्। । यक् तु पूर्वेणैव प्रतिषिद्धः। अनंस्त दण्डः स्वयमेव । ञियकोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञां द्विधौ धीनां चोपसंख्यानं कर्तव्यम्। णिगिति हेतुमण्णिचोऽन्यस्य वा विशेषेण ग्रहणम्। अचीकरत कटः स्वयमेव। कारयते कटः स्वयमेव । अश्रन्थिष्ट मेखला स्वयमेव। श्रथ्नीते माला स्वयमेवा अग्रन्थिष्ट मेखला स्वयमेव । ग्रथ्नीते मेखला स्वयमेव। अवोचत वाक् स्वयमेव। ब्रूते वाक् स्वयमेव । द्विधौ धीनां व्यकृषत सैन्धवाः स्वयमेव । व्यकुर्वत सैन्धवाः स्वयमेव। विकुर्वते सैन्धवाः स्वयमेव। ञियकोः प्रतिषेधे कथं कर्त्राश्रयाः कयादयः। नमः प्राप्त इत्यतस्तुशब्दोऽनुवर्तते तेन कर्ताश्रयविकरणसिद्धिः। अत इदमपि सिद्धम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयते हस्ती स्वयमेव । सिञ्चन्ति हस्तिनं हस्तिपकाः। सेचयते हस्ती स्वयमेव। डाविति द्विधिः यदान्यत्कर्म प्रति स्वातन्त्र्येण विवक्षा तदा कर्त्राश्रया विधयो भवन्ति। आरोहयमाणो हस्ती स्थलमारोहति मनुष्यान्। यथा भिद्यमानः कुशूलः पात्राणि भिनत्ति। इह कस्माद्दो न भवति । स्मरति वनगुल्मस्य कोकिलः। स्मरयत्येनं वनगुल्मः स्वयमेव। कर्मस्थभावकानां कर्मस्थक्रियाणां चात्मकर्मविवक्षाकर्तृस्वभावकं बाध्या नमिति दो न भवति ॥

## कुषिरञ्जेः श्यो मे वा ॥ ६० ॥

कुषिरञ्जित्येताभ्यां कर्मण्यात्मनि वा श्यो भवति मे परतः । कथं मविधिः वृद्धकुमारीवरवाक्यन्यायेन यथा बहुक्षीरघृतमोदनं मम पुत्रा भुञ्जीरन्नित्यत्र वरादिलब्धिः । कुष्यति पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव । यदा श्यो न भवति तदा यग्दविधी भवतः । कुष्यते पादः स्वयमेव । रज्यते वस्त्रं स्वयमेव । यदनुवर्तते तदपवादोयं तेन लिङ्लिडोः स्यादिविषये च नायं विधिः ॥

## तपस्तपःकर्मकस्य कर्मवत् ॥ ॥ ६१ ॥

तपतेस्तपःकर्मकस्य कर्त्ता कर्मवद्भवति । कर्मातिदेशस्य यग्दविधी प्रयोजनम् । तप्यते तपः साधुः । अर्जयतीत्यर्थः । अतप्यत तपः साधुः । अतप्त तपः साधुः । तपःकर्मकस्येति किम् । उत्तपति सुवर्णं सुवर्णकारः ॥

## ञिङ्गै ॥ ६२ ॥

मण्डूकप्लुत्या ते इति वर्तते लुङीति च ञिरित्ययं त्यो भवति ङावर्थे लुङि ते परतः । भावे आसि भवता । कर्मणि अकारि कटो भवता । अलावि केदारो भवता । पुनर्ञिग्रहणं किम् । ञिरेव यथा स्यात् । यदन्यत्प्राप्नोति तन्माभूत् । उपाश्लेषि कन्या । श्लिष इति क्सो न भवति ॥

## गे यक् ॥ ६३ ॥

ङाविति वर्तते ङिवाचिनि गे यक् भवति । आख्यातवाच्यस्य भावस्यैकत्वात् अस्मद्युष्मत्सञ्ज्ञाभावाच्च अन्यसञ्ज्ञक एक एव च भवति । आस्यते भवता । सुप्यते

भवता । कर्मणि क्रियते कटः । भुज्यते ओदनः । ऋकारस्य दीत्वे प्राप्ते रिश्यग्लिश इति रिः । कर्मसामान्यात् आत्मकर्मण्यपि यग् भवति । क्रियते कटः स्वयमेव । भिद्यते कुशूलः स्वयमेव । कथं भिद्यते कुशूलेन स्वयमेवेत्यत्र कर्त्तरि ता । अत्राकर्मकत्वविवक्षा । तेन भावे लकारः । लान्तस्योभयविवक्षा । व्यक्तस्वार्थे स्वकर्मकविवक्षैव । भेत्तव्यं कुशूलेन स्वयमेव । भिन्नं कुशूलेन स्वयमेव । इषद्भेदं कुशूलेन स्वयमेव ॥

कर्तरि शप् ॥ ६४ ॥

कर्तृवाचिनि गे परतः धोः शप्भवति । जयति । भवति । तरति । शकारः मिङ्शिद्इति विशेषणार्थः । पकारः गोपिदिति विशेषणार्थः ॥

दिवादेः श्यः ॥ ६५ ॥

दिव इत्येवमादिभ्यः श्यो भवति गे परतः । दाव्यति । सीव्यति । हल्यभकुर्च्छुर इति उङो दीत्वम् । इमे श्यादय शपोऽपवादः ॥

वा भ्राशम्लाशभ्रमुक्रमुत्रसित्रुटिलषः ॥ ६६ ॥

भ्राश म्लाश भ्रम् क्रम् त्रसि त्रुटि लष इत्येतेभ्यो धुभ्यो वा श्यो भवति । उभयत्र विभाषेयम् । भ्राशते भ्राश्यते । म्लाशते । म्लाश्यते । भ्रमति । भ्रम्यति । श्ये भौवादिकस्याशमादित्वाद्दीत्वं नास्ति दैवादिकस्य दीत्वम् । भ्रमति । भ्राम्यति । क्रमति । क्राम्यति । क्रमो मे इति दीत्वम् । त्रसति । त्रस्यति । त्रुटति । त्रुट्यन्ति । लषति । लष्यति । क्रमिग्रहणं न कर्तव्यम् । दिवादिपाठात् श्ये सति समि

त्यामदोदीरिति दीत्वं सिद्धम् । छिवक्लमचमासि पुनर्दीत्ववचनं ज्ञापकं शयपि भवतीति ॥

**यसः ॥ ६७ ॥**

यसु प्रयत्न इत्यस्माद्वा श्यो भवति । यसति । यस्यति ॥

**समः ॥ ६८ ॥**

संपूर्वाच्च यसः वा श्यो भवति । संयस्यति । संयसति । नियमेऽयं सम एव च गेर्विकल्पो नान्यस्मात् । आयस्यति । प्रयस्यति । दिवादिपाठान्नित्यः श्यः ॥

**स्वादेः श्नुः ॥ ६९ ॥**

षुञ् इत्येवमादिभ्यो धुभ्यः श्नुरित्ययं त्यो भवति । सुनोति । सिनोति ॥

**श्रुवः शृ ॥ ७० ॥**

श्रु इत्येतस्मात् श्नुर्भवति शृ इत्ययं चादेशः । श्रु इति भुवादौ स्वादौ च पठ्यते । शृणुतः । शृण्वन्ति ॥

**वाऽक्षः ॥ ७१ ॥**

अक्ष इत्येतस्माद्धोः वा श्नुर्भवति । अक्ष्णोति । अक्षति । भौवादिकोऽयम् ॥

**तक्षः स्वार्थे ॥ ७२ ॥**

स्वार्थस्तनूकरणम् । तक्षु इत्यस्मात् स्वार्थे वा श्नुर्भवति ॥ तक्ष्णोति काष्ठम् । तक्षति काष्ठम् । स्वार्थे इति किम् । सन्तक्षति वाग्भिर्दुर्जनः ॥

**रुधितुदादिभ्यां श्नमृशौ ॥ ७३ ॥**

रुधादिभ्यस्तुदादिभ्यः श्नमृशौ त्यौ भवतः । शकारः

श्नान्मखमिति विशेषणार्थः। मकारः परोऽचो मिदिति विशेषणार्थः। रुणद्धि। भिनत्ति। तुदादिभ्यः शः। तुदति। क्षिपति ॥

## कृञ्तनादेरुः ॥ ७४ ॥

कृञ् इत्येतस्मात्तनादिभ्यश्च उरित्ययं त्यो भवति। करोति। कुरुतः। कुर्वन्ति।

तनादिभ्यः। तनोति। सनोति। क्षणोति। तनादित्वादेव सिद्धे पृथक् कृञो ग्रहणं किम्। अन्यत्तनादिकार्यं करोतेर्माभूत्।

तनादिभ्यस्तथासोरिति विभाषया सेरुप्न भवति। अकृत। अकृथाः। न चानुप्पक्षे प्राङ्नोरिति खं सम्भवति। तस्मिन् प्राप्ते उप आरम्भात्सः श्रवणं प्रसज्येत ॥

## धिन्विकृण्व्योर च ॥ ७५ ॥

धिवि प्रीणने कृवि हिंसाकरणयोः इत्येताभ्यां उरित्ययं त्यो भवति अकारश्चान्तादेशः। धिनोति। कृणोति। अतः खम्। नधुग्वेग इति प्रतिषेधात् परेऽचः पूर्वविधाविति स्थानिवद्भावाद्धा न भवति। सनुम्कोच्चारणं ज्ञापकं त्योत्पत्तेः प्रागेव नुम्भवतीति। तेन कुण्डा हुण्डेति सिद्धम् ॥

## क्र्यादेः श्ना ॥ ७६ ॥

क्री इत्येवमादिभ्यो धुभ्यः श्ना इत्ययं त्यो भवति। क्रीणाति। प्रीणाति ॥

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ७७ ॥

स्तभ्नादिभ्यः श्नुर्भवति श्ना च। स्तभ्नोति। स्तभ्नाति।

स्तुभ्नोति । स्तुभ्नाति । स्कभ्नोति । स्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति । स्कुनाति । स्कुनोति । स्कुञ् क्र्यादिषु पठ्यते । इतरेषामिहैवोपदेशः उदित्करणादन्यत्रापि प्रयोगः ॥

**हौ हलः श्नः शानः ॥ ७८ ॥**

हल उत्तरस्य श्ना इत्येतस्य शान इत्ययमादेशो भवति हौ परतः । अशान । पुषाण । हाविति किम् । अश्नाति । हल इति किम् । क्रीणीहि । श्न इति स्थानिनिर्देश किमर्थः स्तम्भादीनां यदा श्नुस्तदा मा भूत् । स्तभ्नुहि । स्थान्तरं वा सर्वेभ्यः सम्भाव्यते । शानस्य शित्करणङ्ज्ञापकम् । अनित्योऽनुबन्धस्य स्थानिवद्भाव इति तेन लङादीनां मिवादिषु स्थानिवद्भावादित्वं ङि च । न भवति पचमाना स्त्री । अचिनवम् । असुनवम् ॥

**ईपाऽत्र वाक् ॥ ७९ ॥**

धोरिति वर्तते । अत्र धोरधिकारे ईपा निर्दिष्टं वाक्संज्ञं भवति । गम्यमानक्रियापेक्षया ईपेत्यस्य करणत्वम् । वक्ष्यति कर्मण्यण् कुम्भकारः । शरलावः । मृदुपस्येयं वाक्संज्ञा तेन कर्तृकर्मणोः कृतीति कर्मणि ता भवति । तासाद्वाक्मः परत्वेन । अत्रग्रहणं विस्पष्टार्थम् । वागितायमन्वर्था संज्ञा । ब्रूतेऽर्थे वागिति तेनासामर्थ्ये वाक्संज्ञा नास्ति । पश्य कुम्भं करोति कटम् । मृत्पिण्डं कुम्भं करोति । महान्तं कुम्भं करोति । विशेषणानां च न भवति । हरतेर्दृतिनाथयोः पशाविति पशुशब्दस्य न भवति । यत्र वाचकत्वं तत्र भवति । काशकटकारः ॥

**कृदमिङ् ॥ ८० ॥**

अत्र धोरधिकारे मिङ्वर्जितास्त्याः कृत्सञ्ज्ञा भवन्ति। अत ऊर्द्ध्वं ये वक्ष्यन्ते तेषामधिकारेणेयं सञ्ज्ञा। वक्ष्यति तव्यानीयौ। कर्तव्यः। करणीयः। अत्र कृत्सञ्ज्ञाप्रयोजनम्। इत्यः। स्तुत्यः। पिति कृतीति तुक्। अमिङिति किम्। चीयात्। स्तुयात्। अकृद्यकारादीत्वं सिद्धम्॥

## प्राक्क्तेर्वाऽसमः॥ ८१॥

स्त्रियां क्तिरिति वक्ष्यते। प्रागेतस्मादसमो यस्त्यः कृत् स वा भवतीत्येषोऽधिकारो वेदितव्यः सरूपस्त्वपवादो बाधक एवेति भावः। विक्षेपकः। विक्षेप्ता। विक्षिपः। इगुपधलक्षणकविषये ण्वुतृचावपि भवतः। प्राक्क्तेरिति किम्। चिकीर्षा। अस्त्यादित्यकारः क्तेर्बाधकः। व्याक्रोशी। व्याकुषिरित्येवमादिषु यत्नो विधेयः। असम इति किम्। गोदः। कम्बलदः। आतः क इति को भवति। अणोऽपवादः। अनुबन्धापाये रूपगतं समत्वमत्रम्॥

## ख्यावोर्थ्याः॥ ८२॥

प्रागिति वर्तते ण्वुतृचाविति वक्ष्यति प्रागेतस्माद्ये त्यास्ते व्यसंज्ञा वेदितव्याः। देवदत्तस्य कर्तव्यम्। देवदत्तेन कर्तव्यम्। व्यप्रदेशाः व्यस्य वा कर्तरीत्येवमादयः॥

## तव्यानीयौ॥ ८३॥

तव्य अनीय इत्येतौ त्यौ भवतः। कर्तव्यः। करणीयः कथं वास्तव्यः। वास्तु क्षेत्रं तस्माद्भवाद्यर्थे दिगादित्वाद्यः। एवं वस्तुनि भवो वस्तव्यः॥

## योऽचोरासुयुवः ॥ ८४ ॥

य इत्ययं त्यो भवत्यजन्ताद्धोः अवर्णान्त आसु यु इत्येतान् वर्जयित्वा । देयम् । गेयम् । ईद्ये इति ईत्वं गागयोरिति पुनरेप् । देयमृणइति निर्देशादीत्वे गुकार्ये निवृत्ते पुनरेप् । दित्स्यं धित्स्यमित्यत्र अगे ये परतोऽतः खम् । अच इति किम् । पाक्यम् । अरासुयुव इति किम् । कार्यम् । हार्यम् । आसाव्यम् । याव्यम् ॥

## पोरदुङोऽत्रपिबपिरपिलपिचमः ॥ ८५ ॥

पवर्गान्ताद्धोरदुङ य इत्ययं त्यो भवति अपिबपिरपिलपिचमीन् वर्जयित्वा । रभ्यम् । लभ्यम् । समत्वेन ण्यापवादोऽयम् । पोरिति किम् । वाच्यम् । अदुङ इति किम् । डेप्यम् । कुटादित्वादेप्न स्यात् । तपरकरणमसन्देहार्थम् । अत्रापि वपिरपिलपिचम इति किम् । त्राप्यम् । वाप्यम् । राप्यम । लाप्यम् । आचाम्यम् ।

## शकिसहश्च ॥ ८६ ॥

शकि सह इत्येताभ्यां यो भवति । शक्यम् । सह्यम् । चकारो ऽनुक्तसमुच्चयार्थः । तेन सभितकिचतियतियजिजनीनां संग्रहः । सस्यम् । तक्यम् । चत्यम् । यत्यम् । यज्यम् । जन्यम् । हनो वा वध इति च वक्तव्यम् । वध्यम् । घात्यम् ॥

## गदमदचरयमोऽगेः ॥ ८७ ॥

गद मद चर यम इत्येतेभ्यो ऽगिपूर्वेभ्यः यस्त्यो भवति । गद्यम् । मद्यम् । चर्यम् । यम्यम् । अगेरिति किम् । निगाद्यम् । प्रमाद्यम् । अभिचार्यम् । प्रायाम्यम् । यमः

पोरदुङ इति सिद्धे नियमार्थमिदम् । अगेरेव यथा स्यात् । इतरेषामप्राप्ते विधिः । चरेराङि चागुराविति वक्तव्यम् आचर्यं व्रतम् । अगुराविति किम् । आचार्यो गुरुः ॥

**पण्यावद्यवर्यावह्यार्योपसर्याजर्याणि ॥ ८८ ॥**

पण्य अवद्य वर्या वह्य अर्य उपसर्या अजर्य इत्येतानि शब्दरूपाणि निपात्यन्ते॥पणायमिति निपात्यते व्यव हर्तव्यं चेद्भवति पण्यः कम्बलः। पण्या गौः। पाण्यमित्यन्यत्र । अवद्यं भवति गर्ह्यं चेत्। अवद्यं द्यूतम् । अवद्यं पापम् । न उद्यते इत्यनुद्यमन्यत् । वर्येति वृङो यो भवत्यनिरोधेऽर्थे । शतेन वर्या । सहस्रेण वर्या । स्त्रीलिङ्गादन्यत्र ण्य एव भवति । वार्या ऋषयः धनसंविभागरूपोऽप्यनिरोधो ऽस्ति अनिरोध इति किम्। वार्या गौः शस्येषु। वह्यमिति निपात्यते करणञ्चेद्भवति । वहति तेन वह्यं शकटम् । वाह्यमन्यत् । अर्य इति निपात्यते स्वामिनि वैश्ये च । अर्यः स्वामी । अर्यो वैश्यः । अन्यत्र ण्य एव । आर्यः साधुः । उपसर्येति निपात्यते काल्या प्रजने चेत् प्रजनो गर्भग्रहणकालः प्राप्तोऽस्याः काल्या तदस्य प्राप्तमिति वर्तमाने कालाद्य इति यः । उपसर्या गौः । उपसर्या वडवा । उपसार्या शरदि मथुरा अन्यत्र । अजर्यमिति नञ्पूर्वाज्जृषः कर्तरि यो निपात्यते सङ्गतेऽर्थे । न जीर्यत इत्यजर्यमार्यसङ्गतम् । अजरिता कम्बल इत्यन्यत्र ॥

**वदः सुपि क्यप् च ॥ ८९ ॥**

अगेरिति वर्तते। वदतेः क्यप्भवति यश्च गिवर्जिते सुपि वाचि । सत्यमुद्यत इति सत्योद्यम् । सत्यवद्यम् ।

मिथ्योद्यम् । मिथ्यावद्यम् । मिङ्किति षसः । सुपीति किम् । वाद्यम् । अगेरित्येव । अनुवाद्यम् ॥

## भूयहत्ये ॥ ६० ॥

सुप्यगेरिति वर्तते । भूय हत्य इत्येते शब्दरूपे निपात्येते गिवर्जिते सुपि वाचि । देवभूयं गतः । देवत्वं गत इत्यर्थः । साधु भूयं गतः । क्यबत्र निपात्यते । दरिद्रहननं दरिद्रहत्या । चोरहत्या । हन्तेः स्त्रीलिङ्गे भावे क्यप्निपात्यते । सुपीत्येव । भव्यम् । घातो वर्तते । अगेरित्येव प्रभव्यमुपघातः ॥

## स्तुशासिणवृदृजुषः क्यप् ॥ ६१ ॥

सुप्यगेरिति निवृत्तम् । सामान्येनायं विधिः । स्तु-शास् इण् वृणोति दृ जुष इत्येतेभ्यः क्यप्भवति । स्तुत्यः । शिष्यः । इत्यः । आदृत्यः । आदृत्यः । पुनः क्यब्ग्रहणं किमर्थम् । ओरावश्यक इत्यस्यापि बाधनार्थम् । अवश्य-स्तुत्यः । शंसिदुहिगुहिभ्यो वेति वक्तव्यम् । शस्यम् । दुह्यम् । शंस्यम् । दोह्यम् । गुह्यम् । गोह्यम् । आङ्पूर्वादञ्जेः सञ्ज्ञायां क्यब् वक्तव्यः । आज्यम् । न वक्तव्यम् । पुनः क्यप्ग्रहणा-द्योगविभागाद्भविष्यति । उपेयमिति इङो रूपम् ॥

## ऋदुङो ऽकॢपिचृतेः ॥ ६२ ॥

ऋकारोङो धोः क्यप्भवति कृपिचृती वर्जयित्वा । वृत्यम् । वृध्यम् । ण्यापवादोऽयम् । अकृपिचृतेरिति किम् । कल्प्यम् । चर्त्यम् । पाणौ समवशब्दे च सृजेर्ण्यौ वक्तव्यः । पाणिसर्ग्या रज्जुः । समवसर्ग्यः कटः । भृञः क्यप्भवति परखु विषये । भृत्याः कर्मकराः । भृत्याः शिशवः । भर्तव्या इत्यर्थः । अस्वाविति किम् । भार्या नाम क्षत्रियाः । केचित्

देवदत्तस्य भार्या । स्त्रियां समजनिषदेत्यादिना भावे क्यप् । कर्मणि चायं भार्याशब्दः । संपूर्वाद्वेति वक्तव्यम् । सम्भृत्या सम्भार्याः कर्मक रः ॥

## खेयराजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथाः ॥ ९३ ॥

खेयादयः शब्दा निपात्यन्ते । खेयमिति खनतेर्वा निपात्यते इकारश्चान्तादेशः । आदेये वा इत्त्यात्वं नाशङ्कनीयम्। निपातनादेव राजसूयमिति राजशब्दे वान्ते भान्ते सुनोतेः क्यप् दीर्त्वं च निपात्यते । राज्ञा सूयते राजा वा अस्मिन् सूयते इति राजसूयम् । सरति कर्माणि सुवतीति वा सूर्यः । सर्त्तेरुत्वं सुवतेर्वा रुडागमः क्यप्च निपात्यते मृषापूर्वस्य वदतेर्नित्यं क्यप्निपात्यते । मृषोद्यम् । रुच्यमिति कर्त्तरि क्यप् निपात्यते । कुप्यमिति सज्ञायां गुपेरादौ कत्वं क्यप्च निपात्यते । कुप्यं फल्गु भाण्डमित्यर्थः । गोप्यमन्यत् । कृष्टे पच्यन्ते स्वयमेव कृष्टपच्या व्रीहयः । आत्मकर्मणि क्यप् । न व्यथतेऽसावव्यथ्यः । नञ्पूर्वाद्व्यथतेः कर्त्तरि क्यप् निपात्यते ॥

## भिद्योद्ध्यौ नदे ॥ ९४ ॥

भिद्य उद्ध्य इत्येतौ निपात्येते नदेऽभिधेये । भिनत्ति कूलानि भिद्यः । उज्झत्युदकमिति उद्ध्यः । कर्तरि कारके क्यप् उज्झेर्धत्वं च निपात्यते । नद इति किम् । भेदः । उज्झः । इगुकूलक्षणः कः पचाद्यच यथाक्रमम् ॥

## पुष्यसिद्ध्यौ भे ॥ ९५ ॥

पुष्य सिध्य इत्येतौ शब्दौ निपात्येते भेऽभिधेये ।

पुष्यन्त्यस्मिन्नर्था आरभमाणानामिति पुष्यः । सिध्यन्त्यस्मिन्नर्था इति सिद्ध्यः । अधिकरणे क्यप्निपात्यते नक्षत्रे वाच्ये । अन्यत्र पोषणः सेधन इति च भवति ॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ९६ ॥

विपूय विनीय जित्या इत्येते शब्दा निपात्यन्ते यथासंख्यं मुञ्ज कल्क हलि इत्येतेषु वाच्येषु । विपूयते इति विपूयो मुञ्जः । पवतेः क्यप्निपात्यते । विपव्यमन्यत् । विनीयतेऽसौ घृतादिना त्रिफलादिकल्कः । विनेयमन्यत् । जित्यो हलिः । जेयमन्यत् ॥

## पदास्वैरिबाह्यापक्ष्येषु ग्रहः ॥ ९७ ॥

पदे अस्वैरिणि बाह्यायां पक्ष्ये चार्थे ग्रहेर्धोः क्यब्भवति । प्रगृह्यते इति प्रगृह्यं पदम् । अवगृह्यम्पदम् । अस्वैरी परवशः । गृह्यका इमे । अनुकम्पायाङ्कः परतन्त्रा इत्यर्थः । बहिर्भवा बाह्या गृह्यते इति गृह्या ग्रामस्य गृह्या ग्रामगृह्या नगरगृह्या सेना । ताभ्यां बहिर्भूता इत्यर्थः । स्त्रीलिङ्गादन्यत्र न भवति । पक्षे भवः पक्ष्यः । भरतगृह्यः । भुजबलिगृह्यः तत्पक्ष्य इत्यर्थः ॥

## कृवृषिमृजां यशोभद्रस्य ॥ ९८ ॥

कार्थे ता । कृ वृषि मृज् इत्येतेभ्यः क्यप् भवति यशोभद्रस्याचार्यस्य मतेन । कृत्यम् । कार्यम् । नित्यं ण्यः प्राप्तः । वृष्यम् । वर्ष्यम् । परिमृज्यम् । परिमार्ग्यम् । ऋदुड इति नित्यं क्यप् प्राप्तः ।

## युग्यं पत्रे ॥ ९९ ॥

पतति अनेनेति पत्रं वाहनं तस्मिन्नर्थे युग्यमिति निपात्यते। युज्यते इति युग्योऽश्वः । युग्यो गौः। क्यप् कुत्वं च निपात्यते पत्रादन्यत्र योग्यमिति ॥

घ्यः ॥ १०० ॥

घ्य इत्ययं त्यो भवति धोः। अयमुत्सर्गः। अजन्ताद्यः क्यप् चास्यापवादौ। कार्यम्। हार्यम्। पाक्यम्। पाठ्यम् ॥

ओरावश्यके ॥ १०१ ॥

उवर्णान्ताद्धोर्ण्यो भवत्यावश्यके द्योत्ये। अवश्यमित्यस्य भावःआवश्यकम्। मनोज्ञादित्वाद् वुञ्। लाव्यम्। पाव्यम्। यद्यावश्यकेऽर्थे ऽवश्यलाव्यमिति कथं सविधिः। मयूरव्यंसकादित्वाद्विभाषया । आवश्यक इति किम्। लव्यम्। पठ्यम्॥

अमावस्या वा ॥ १०२ ॥

अमावस्य इति वा प्रादेशो निपात्यते अमा वसतः सूर्याचन्द्रमसावस्यां अमावस्या। अमावास्या। अमाशब्दे सहार्थे वाचि वसेरधिकरणेऽर्थे ण्यो विभाषया उङः प्रादेशश्च निपात्यते प्रदेशेषु एकदेशविहृतस्य ग्रहणार्थम् ॥

पाय्यसान्नाय्यनिकाय्यधाय्याऽऽनाय्यप्रणाय्या मानहविर्निवाससामिधेन्यनित्याऽसम्मतिषु ॥ १०३ ॥

पाय्य सान्नाय्य निकाय्य धाय्य आनाय्य प्रणाय्य- इत्येते शब्दा निपात्यन्ते यथासंख्यं मान हवि निवास सामिधेनी अनित्य असम्मति इत्येतेष्वर्थेषु। पीयतेऽनेनेति

पाय्यं मानम् । माङः करणे ण्यः । आदिपत्वञ्च निपात्यते । मानमन्यत् । सन्नीयते इति सान्नाय्यं हविः । सपूर्वान्नयतेः ण्यः । आयादेशः । गे दीर्घत्वं च निपात्यते । सन्नेयमन्यत् । निचीयते इति निकाय्यो निवासश्चेत् । निपूर्वाच्चिञः ण्याचादेशावादिकत्वं च निपात्यते । निचेयमन्यत् । धीयते इति धाय्या सामिधेनी । दधातेर्ण्यो निपात्यते विशिष्टा ऋचः सामिधेन्यः । तत्र रूढिवशात्काचिदेवोच्यते । धेयमन्यत् । आनाय्य इति नयते राङ्पूर्वाण्यायादेशौ निपात्यौ अनित्येऽर्थे आनाय्यो दक्षिणाग्निः । रूढिरेषा दक्षिणाग्निविशेषस्य । आनेयोऽन्यः । अविद्यमानसम्मति रसम्मतिः प्रपूर्वान्नयतेर्ण्यायादेशौ निपात्यौ प्रणाय्यश्चौरः । प्रणेयोऽन्यः ॥

## कुण्डपाय्यसंचाय्यपरिचाय्योपचाय्यचित्याग्निचित्याः ॥ १०४ ॥

कुण्डपाय्य सञ्चाय्य परिचाय्य उपचाय्य चित्य अग्निचित्या इत्येतानि शब्दरूपाणि निपात्यन्ते । कुण्डेन पीयतेऽस्मिन्सोम इति कुण्डपाय्यः क्रतुः । कुण्डशब्दे भान्ते ण्योऽधिकरणे निपात्यते । कुण्डपानमन्यत् । सञ्चीयते इति सञ्चाय्यः क्रतुः । सञ्चेयमन्यत् । परिचाय्योपचाय्यौ निपात्येते अग्नावभिधेये । परिचेय उपचेय इत्यन्यत् । चित्याग्निचित्याशब्दौ निपात्येते अग्नावभिधेये चीयते सौ चित्योऽग्निः । अग्निचयनमग्निचित्या । अन्ये स्त्रीलिङ्गे भावे क्यप्निपात्यः ॥

## ण्वुल्तृचौ ॥ १०५ ॥

ण्वु तृच् प्रत्ययौ त्यौ भवतः । कारकः । कर्ता भोजकः । भोक्ता ॥

**नन्दिग्रहिपचिभ्यो ल्युणिन्यचः ॥ १०६ ॥**

नन्द्यादिभ्यः ग्रहादिभ्यो पचादिभ्यश्च यथासंख्यं ल्यु णिन् अच् इत्येते त्या भवन्ति । नन्दयतीति नन्दनः । लकारः युवोरनाकाविति सामान्यग्रहणाविघातार्थः । नन्दिवाशिमदिनर्दिभूषिसाधिशोभिवर्द्धिभ्यो ण्यन्तेभ्यः संज्ञायां सहितपिदमिज्वलिरुचिजल्पिदृपिरसिसङ्क्रन्दिसङ्कर्षिभ्यः संज्ञायामण्यन्तेभ्यः । जनार्दनः । मधुसूदनः । लवण इति निपातनाण्णत्वम् । विभीषणः । पवनः । वित्तनाशनः । कुलदमन एतावणोऽपवादौ इति नन्द्यादिः । ग्रह उत्सह उद्भास स्था उद्भास मन्त्र संमर्द निरक्षी निश्रावी निवार्य निवेशी एतेभ्यः निपूर्वेभ्यः । अयाची अव्याहारी असंव्याहारी अवादी अव्राजी अवासी एतेभ्यः प्रतिषिद्धेभ्यः । अचाभचित्तकर्तृकाणां प्रतिषिद्धानामिति वर्तते । अकारी अहारी अविनायी विषयीशब्दौ देशे अभिभावी निपातनात्प्रविभावी भूते भवतः अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिः । पच पठ वय वद चल पत तथा चरिचलिपतिवदीनामच्यात्कस्येति वक्ष्यते । नदट् प्लवट् तरट् चरट् चोरट् चेलट् हट देवट् टित्करणं स्त्रियां यर्थम् । जर मर क्षरं सेच मेष कोष दर्भ सर्प नर्त प्रण डर अणि विषयेपि श्वपच चक्रधर पचादिराकृतिगणः ॥

**ज्ञाकॄप्रीगुङः कः ॥ १०७ ॥**

ज्ञा कॄ प्री इत्येतेभ्यः इगुङश्च धोः को भवति । जानातीति ज्ञः । आकारान्तलक्षणो णः प्राप्तः । इह अर्थ जाना-

तीति अर्थज्ञः । परत्वादातः के सति नित्यः सविधिः । उत्किरतीति उत्किरः । विकिरः । प्रिणातीति प्रियः । इगुङः । विक्षिपः । विबुधः । विन्दुः इह काष्ठभेदः इति परत्वादण् ।

आतो गौ ॥ १०८ ॥

आकारान्ताड्डोः को भवति गौ वाचि । णापवादो-ऽयम् । प्रस्थः । सुग्लः । इह वडवासन्दाय इति परत्वादण् ॥

पाघ्राध्माधेट्दृशः शः ॥ १०९ ॥

गाविति वर्तते । पादिभ्यः शो भवति । पा इति साह-चर्यादलाक्षणिकत्वाच्च पिबतेर्ग्रहणम् । उत्पिबः । विपिबः । उज्जिघ्रः । विजिघ्रः । संज्ञायां तु व्याघ्रैरुपमेये तद्योग इति निर्देशात् कः । व्याघ्रः । उद्धमः । विधमः । उद्धयः । विधयः । उत्पश्यः । विपश्यः । गाविति केचिदिह नाभि-सम्बध्नन्ति । तेन । पश्यतीति पश्यः । जिघ्रः ॥

लिम्पविन्दधारिपारिवेद्युदेजिचेतिसाति-साहिभ्यो ऽगेः ॥ ११० ॥

लिम्प विन्द धारि पारि वेदि उदेजि चेति साहि इत्येतेभ्यः अगिपूर्वेभ्यः शो भवति । लिम्पतीति लिम्पः । कथं कुड्यलेप इति मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरानिति इगुङः कस्यायं शो बाधको नाणः । विन्द-तीति विन्दः । लिम्प विन्द इति सानुषङ्गनिर्देशादन्यत्रा-प्ययं विधिर्भवति । संज्ञायां गावपि । निलिम्पा नाम देवाः। अरविन्दम् । गोविन्दः । इति अगविषयेऽपि सः सिद्धः । धारयतीति धारयः । पारयः । वेदयः । उदेजयः । निर्देशा-

देव गिपूर्वस्य ग्रहणम् । चेतयः । सातं करोतीति णिच सातयः । साहयः । आद्याभ्यां के इतरेभ्योऽचि प्राप्ते वचनम् ॥

## दाञ्धाञोर्वा ॥ १११ ॥

कार्थे ताविभक्तो । दाञ् धाञ् इत्येताभ्यां अगिपूर्वाभ्यां वा शो भवति । ददः । दधः । दायः । धायः । अगाविस्येव । प्रदः । प्रधः । अनुबन्धनिर्देशो यङ्लुवन्तयो शो मा भूदित्येवमर्थः ॥

## ज्वलितिकसन्ताराणः ॥ ११२ ॥

इति आद्यर्थे अविभक्तिकश्च निर्देशः । ज्वलादिभ्यः कस गतौ इत्येवमन्तेभ्यः वा णो भवति । ज्वालः । ज्वलः । कासः । कसः । चालः । चलः । अगावित्येव । प्रज्वालः ॥

## श्यादूव्यधास्रुसंस्रुलिहश्लिषश्वसतीणः ॥ ११३ ॥

श्यैङ् आकारान्त व्यध आस्रु संस्रु लिह श्लिष श्वस अतीण् इत्येतेभ्यो णो भवति । वेति निवृत्तं अगाविति च । अवश्यायः । आदिति सिद्धे पुनः श्यग्रहणं आतोगावित्यस्य बाधनार्थः । आत् । दायः । धायः । व्याधः । आस्रावः । संस्रावः । लेहः । श्लेषः । श्वासः । अवादिभ्यस्तनेरिति वक्तव्यम् । अवतनोतीत्यवतानः ॥

## हसोऽवे ॥ ११४ ॥

हृ सा इत्येताभ्यां अवपूर्वाभ्यां णो भवति । अवहारः । अवसायः ॥

## दुन्योरगौ ॥ ११५ ॥

डुनी इत्येताभ्यां णो भवति । दुनोतीति दावः । नायः । अगाविति किम् । प्रदः । प्रणयः ॥

## विभाषा ग्रहः ॥ ११६ ॥

ग्रहेर्विभाषया णो भवति । ग्राहः । ग्रहः । व्यवस्थितविभाषेयम् । जलचरे ग्राह एव । ज्योतिषि ग्रह एव । विभाषेति योगविभागात् भवतीति भावः ॥

## गेहे कः ॥ ११७ ॥

ग्रहेर्गेहेऽभिधेये को भवति । गेहं सद्म तात्स्थ्याद्दारा अपि गृहं गृहाः ॥

## शिल्पिनि वुः ॥ ११८ ॥

शिल्पिन्यभिधेये वु भवति धोः । नर्त्तकः । खनकः । रजकः । रजकरजनरजसां नखं वक्ष्यति । एत एव धवः प्रयोजयन्तीति केचित् ॥

## गो थयुथकौ ॥ ११९ ॥

गायतेण्युं थक इत्येतौ त्यौ भवतः । शिल्पिनीति वर्तते । गायनः । गाथकः ।

## हायनः ॥ १२० ॥

हायन इति निपात्यते व्रीहिकालयोः कर्त्रोः । जहात्युदकमिति हायना नाम व्रीहयः । जहाति सहृताः क्रियाः हायनः संवत्सरः ॥

## प्रसृल्वः साधुकारिणि वुन् ॥ १२१ ॥

प्रु सृ लू इत्येतेभ्यः धुभ्यः साधुकारिणि कर्तरि वुन् भवति । साधु प्रवते यः स प्रवकः । एवं सरकः । लवकः । साधुकारिणीति किम् । प्रवः ॥

आशिषि ॥ १२२ ॥

आशिषि वार्थे वुन् भवति धोः । जीवतादिति य उच्यते स जीवकः । एवं नन्दकः वर्धकः ॥

## इत्यभयनन्दिविरचितायां जैनेन्द्रमहावृत्तौ द्वितीयस्याध्यायस्य प्रथमः पादः ।

॥ ॐ नमः ॥

कर्मण्यण् ॥ १ ॥

कर्मणि कारके वाचि धोरणित्ययं त्यो भवति । कुम्भकारः । शरलावः । चर्चापारः । कुम्भादि शब्दात् कर्तृकर्मणोः कृतीति ता । वागमिङिति षसः । सीलिका-मिभक्ष्याचरीक्षिक्षमिभ्यो णो वक्तव्यः । धर्म्मशीलः । धर्म्म-शीला । धर्म्मकामः । वायुभक्षः । धर्म्माचारः । धर्म्मापे-क्षः । क्लेशक्षमः । नेदं वक्तव्यम् । घञन्तेन वसे सति सिद्धम् । धर्म्मं शीलमस्य धर्म्मशीलः । धर्म्मे कामोऽस्य धर्म्मकामः । धर्म्मं शीलयतीत्येवमादिविग्रहे अनभिधानादरान भवति यथा आदित्यं पश्यति हिमवन्तं शृणोतीत्येवमादौ न भवति । कुम्भकारादिष्वण् घञन्तेन च वस इत्युभयं भवति ॥

ह्वावामः ॥ २ ॥

ह्वा वा मा इत्येतेभ्यश्चाण् भवति कर्मणि वाचि । के प्राप्ते इदं वचनम् । स्वर्गह्वायः । तन्तुवायः । वातिवाय त्योमा तेश्चाकर्म्मकत्वादग्रहणम् । धान्यं मिमीते मयते वा धान्य-मायः । मीनातिमिनोत्योः कप्राप्तेरभावात् पूर्वेणैवाण ॥

आतः कः ॥ ३ ॥

आकारान्तान्डोः कर्मणि वाचि क इत्ययं त्यो भवति । गोदः । अर्थज्ञः । पार्ष्णित्रम् । अङ्गुलित्रम् । ज्या वयोहानावित्यस्य ब्रह्म जिनातीति ब्रह्मज्यः । के कृते परत्वादातः खं पश्चाज्जिः । असिद्धवदत्राभादित्यात्वख-स्यासिद्धत्वादियादेशो न भवति । यणादेशः सिद्धः । जुहु-वतुः जुहुवुरित्यत्र ह्वेञ आत्वमकृत्वा जिः क्रियते इत्यात्वं नास्तीत्युवादेशः सिद्धः । आह्वः । प्रह्वः । इत्याकारान्तात् आतोगाविति कः प्रागात्वम्पश्चाज्जिः ॥

प्रे ॥ ४ ॥

प्रपूर्वादातः को भवति कर्मणि वाचि । तत्वप्रज्ञः । मोक्षप्रज्ञः । नियमार्थोऽयमारम्भः । प्र एव गौ नान्यस्मि-न्नातः को भवति । गोसंदायः । वडवासन्दायः ॥

दाज्ञः ॥ ५ ॥

अयमपि नियमः । दा ज्ञा इत्येताभ्यामेव प्रपूर्वाभ्यां कर्मणि को भवति । धर्म्मप्रदः । धर्म्मप्रज्ञः । नियमादिह न भवति । पार्ष्णिप्रत्रायः । अङ्गुलिप्रत्रायः । कथं भाष्ये प्रयोगः अभिज्ञश्च पुनरेकत्वादीनामर्थानामिति अत्राभि-धानवशादातो गाविति को भविष्यति ॥

संख्यः ॥ ६ ॥

प्र इति नियमेन निवर्तिते के पुनरारम्भः । सम्पूर्वात् ख्या इत्येतस्मात्कर्मणि वाचि को भवति । पशून् सञ्चष्टे पशु-संख्यः । अश्वसंख्य; ॥

सुपि ॥ ७ ॥

सुबन्ते वाचि धोरातः को भवति । पादैः पिबति पादपः । कच्छेन पिबति कच्छपः । द्वाभ्यां पिबति द्वीपः । समस्थः । विषमस्थः । धर्म्माय प्रददाति धर्म्मप्रदः । शास्त्रेण प्रजानाति शास्त्रप्रज्ञः । अकर्म्मण्यपि वाचि यथा स्यादिति सुप्ग्रहणम् । इह केचिदात इति नानुवर्तयन्ति । तेन मूलविभुजादिष्वभिधानवशात् कः सिद्धः । मूलान् विभुजति मूलविभुजो रथः । जलरुहम् । नखमुचानि धनूंषि । काकगुहास्तिलाः ॥

स्थः ॥ ८ ॥

सुपि वाचि तिष्ठतेः को भवति कर्त्तरि । पूर्वो योगः अनिर्दिष्टार्थत्वात् भावेऽपि यथा स्यादित्यारम्भः । आखूनामुत्थानमाखूत्थः । सलभोत्थः । स्थास्तम्भोः पूर्वस्योद इति सकारस्य पूर्वस्वत्वम् ॥

## दुहो घश्च ॥ ९ ॥

इतः प्रभृति कर्म्मणीति सुपीति च द्वयमनुवर्तते । कर्मणि वाचि दुहेः को भवति घकारश्चादेशः । कामन्दोग्धि कामदुघो धर्म्मः । कामदुघा धेनुः ॥

## तुन्दशोकयोः परिमृजापनुदोः ॥ १० ॥

तुन्द शोक इत्येतयोः कर्म्मणोर्वाचोः परिमृज अपनुद इत्येताभ्यां को भवति । अविशेषेण सुपीत्येतेनैव के सिद्धे आलस्यसुखाहरणयोरर्थयोर्यथा स्यादित्यारम्भः । तुन्दपरिमृजः अलसश्चेत् । शोकापनुदः पुत्रो जातः । पूर्वं तिकुप्रादय इति षसः पश्चाद्वाक्सः । आलस्यसुखाहरणयोरिति किम् । तुन्दपरिमार्ज आतुरः । शोकापनोदो धर्माचार्यः ॥

गष्टक् ॥ ११ ॥

गा इत्येतस्माद्धोः कर्मणि वाचि टगित्ययं त्यो भवति वक्रगः । वक्रगी । प्रेदाज्ञ इति नियमादगिपूर्वादातः कर्मणि को विहितस्तस्मिन्नेव विषये टक् अन्यत्राणेव भवति । वत्क्र-संगायः ॥

सुरासीध्वोः पिबः ॥ १२ ॥

सुरा सिधु इत्येतयोः कर्मणोः पिबतेः टग्भवति । सुरापः । सुरापी । सीधुपः । सीधुपी । अयमपि कापवादः । सुरासीध्वोरिति किम् । क्षीरं पिबतीति क्षीरपा कन्या । पिब इति विकृतनिर्देशः किम् । सुराम्पातीति सुरापा ॥

ग्रहेरः ॥ १३ ॥

ग्रहेर्धोः कर्मणि वाचि अ इत्ययं त्यो भवति । शक्ति-लाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु वाक्षु प्रायेणाभिधा-नम् । शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । घटीग्रहः । धनुग्रहः । सूत्रग्रहो भवति धारयति चेत् सूत्रग्राहोऽन्यः ॥

हञोऽनुत्सेधे ॥ १४ ॥

उत्सेध उत्क्षेपणम् । हञ अनुत्सेधे वर्तमानात् कर्म्मणि वाचि अत्यो भवति । अंस हरति अंसहरः । भागहरः । रिक्थहरः । अनुत्सेधे इति किम् । भारहारः । न केवलमु-च्छ्राये उत्क्षेपणेऽप्युत्सेध इति शब्दो वर्तते तद्यथा नाना-जातीया अनियता उत्सेधजीविन इति ॥

वयसि ॥ १५ ॥

शरीरिणां कालकृतावस्था वयः तत्र अत्यो भवति

वयसि गम्ये । अयमुत्सेधार्थं आरम्भः । कवचहरः क्षत्रिय कुमारः । अस्थिहरश्च शिशुः । इशोरसंभाव्यमानेन वा भारोत्क्षेपणेन वयो गम्यते ॥

**आङि शीले ॥ १६ ॥**

शीलं स्वाभाविकी प्रकृतिः । आङि च वाचि हृञ अत्यो भवति शीले गम्यमाने । पुष्पाहरः । फलाहरः । सुखाहरः । उत्सेधानुत्सेधयोरयं विधिरिष्यते । अनुत्सेधे पूर्वेण कस्मान्न भवति शीले परत्वान्तृत्स्यात् । शील इति किम् । भारमाहरति भाराहारः ॥

**अर्हः ॥ १७ ॥**

अर्हतेः कर्मणि वाचि अत्यो भवति । पूजार्हा प्रतिमा ।

**स्तम्बेरमकर्णेजपौ ॥ १८ ॥**

स्तम्बेरम कर्णेजप इत्येतौ शब्दौ हस्तिसूचकयोरर्थयोर्निपात्येते । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । स्तम्बकर्णयोरमिजपोरिति सूत्रं कर्त्तव्यं सुपोति वतते । षे कृति बहुलमित्यनुपा सिद्धम् । अर्थविशेषपरिग्रहार्थं निपातनम् । इह मा भूत् । स्तम्बे तृणस्तवके रन्ता गौः । कर्णे जपिता वैद्यः ॥

**शमि धोः खौ ॥ १९ ॥**

शमि वाचि धोः खुविषये अत्यो भवति । शम्भवः । शंवदः । शङ्करः । धुग्रहणेऽनुवर्त्तमाने पुनर्धुग्रहणं बाधकबाधनार्थम् । शङ्करा नाम परिव्राजिका । खुविषये कृञो हेत्वादिषु परत्वाट्टो मा भूत् । खाविति किम् । शङ्करी जिनविद्या ॥

**शीङो ऽधिकरणे ॥ २० ॥**

शेतेरधिकरणे सुबन्ते वाचि अत्यो भवति । खे शेते खेशयः । गर्त्तशयः । षे कृति बहुलमिति पक्षे ऽनुप् । शीङ इति योगविभागात् पार्श्वादिषु सुबन्तेषु वाक्षु अत्यो भवति । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः । उत्तानादिषु च कर्तृषु । उत्तानः शेते उत्तानशयः । अवमूर्द्ध-शयः । दिग्वसहपूर्वाच्च अत्यो भवति । दिग्वेन सह शेते दिग्वसहशयः । कथं गिरिशः । लोमादिपाठान्मत्वर्थीयशः । यो हि गिरौ शेते गिरिस्तस्यास्ति ॥

## चरेष्टः ॥ २१ ॥

चरेर्ङौरधिकरणे वाचि टो भवति । कुरुषु चरति कुरुचरः । मद्रचरः । मद्रचरी । अधिकरण इत्येव । कुरूँश्चरति कुरुचारः ॥

## भिक्षासेनादाये ॥ २२ ॥

अनधिकरणार्थमेतत् । भिक्षा सेना आदाय इत्येतेषु वाक्षु चरेष्टो भवति । भिक्षाचरः । सेनाचरः । आदाय-शब्दः प्यान्तः । आदाय चरति आदायचरः ॥

## पुरोऽग्रतोऽग्रेषु सुः ॥ २३ ॥

पुरस् अग्रतस् अग्रे इत्येतेषु सुबन्तेषु वाक्षु सरतेष्टो भवति । पुरःसरः । अग्रतस् आद्यादिभ्य उपसंख्यानमिति एबन्तात्तसिः । अग्रतःसरः । अग्रेसरः । अग्रेसरी । अनोवन्तत्वेप्येकारो निपातनात् ॥

## पूर्वे कर्त्तरि ॥ २४ ॥

कर्तृग्रहणं कर्मनिवृत्त्यर्थं पूर्वशब्दे कर्तृवाचिनि सुबन्ते वाचि सरतेष्टो भवति । पूर्वः सरति पूर्वसरः ।

क्रियाया विशेषणेऽपीष्यते । पूर्वं प्रथमं सरति पूर्वसरः । कर्तरीति किम् । पूर्वं देशं सरति पूर्वसारः ॥

**कृञो हेतुशीलानुलोम्येऽशब्दश्लोककलहगाथा वैरचाटुसूत्रमन्त्रपदे ॥ २५ ॥**

शब्दश्लोकादिवर्जिते कर्मणि वाचि कृञः ट इत्ययं त्यो भवति हेतौ शीले आनुलोम्ये च गम्यमाने । हेतुशब्दोपादानात् इह हेतुः प्रकृष्टं कारणम् । विद्या यशस्करी । धनं कुलकरम् । शीलं स्वभावः । समासकरः । अर्थकरः । आनुलोम्यमनुकूलता । प्रेषकरः । वचनकरः । एतेष्विति किम् । कुम्भकारः । अशब्दादिष्विति किम् । शब्दकारः । श्लोककारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥

**दिवाविभानिशाप्रभाभास्करान्तानन्तादिनान्दीलिपिलिविबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यद्धनुररुष्षु ॥ २६ ॥**

अहेत्वाद्यर्थ आरम्भः । दिवाशब्दे सुबन्ते वाचि विभादिषु कर्मसु वाक्षु करोतेष्ट इत्ययं त्यो भवति । दिवेति सं पदम् । दिवा करोतीति दिवाकरः। विभां करोतीति विभाकरः । निशाकरः । प्रभाकरः । भासनम्भाः भासं करोति भास्करः । सूत्रे भास्करान्तेति सकारस्य निपातनात् । जिह्वामूलीयविसर्जनीयौ न भवतः । कारं करोतीति कारकरः । अन्तकरः । अनन्तकरः । अन्तकरस्य नञ्समासे अन्येऽर्थः प्रतीयते इत्यनन्तग्रहणम् । आदिकरः । नान्दीकरः । लिपिकरः । लिविकरः । बलिकरः । भक्तिकरः । कर्तृ-

करः । चित्रकरः । क्षेत्रकरः । संख्या एकत्वद्वित्वादिका । एककरः । बहुशब्दोऽपि नानाधिकरणवाची संख्याशब्दः । बहुकरः । जंघाकरः । बाहुकरः । अहस्करः । रोसुपीति रेफः । तस्य कृकम्यादिसूत्रेण सत्वम् । धनुस्करः । अरुस्करः । ससेघुस्थस्य इति सत्वं इणः ष इति षत्वम् ॥

कर्म्मणि भृतौ ॥ २७ ॥

कर्म्मशब्दे वाचि कृञष्टो भवति भृतौ गम्यमानायाम् । भृतिर्नियतं कर्म्ममूल्यम् । कर्म करोति कर्म्मकरः । भृताविति किम् । कर्म्मकारः ॥

किंयत्तद्बहुष्वः ॥ २८ ॥

किम् यद् तद् बहु इत्येतेषु वाक्षु कृञः अ इत्ययं ष्टो भवति । किङ्करः । किङ्करा । यत्करः । यत्करा । तत्करः । तत्करा । चौर्य्ये तस्करः। बहुकरा इह बहुशब्दो वैपुल्यवाची । हेत्वादिषु ट एव भवति । किङ्करणशीला किङ्करी ॥

सकृत्स्तम्बे वत्सव्रीह्योरिः ॥ २९ ॥

सकृत् स्तब इत्येतयोः कर्म्मणोः कृञ इरित्ययं ष्टो भवति वत्सव्रीह्योः कर्त्रोः । सकृत्करिर्वत्सः । स्तंबकरिः व्रीहिः । वत्सव्रीह्योरिति किम् । सकृत्कारः । स्तंबकारः ।

दृतिनाथयोः पशौ हृञः ॥ ३० ॥

दृति नाथ इत्येतयोर्वाचोः पशौ कर्तरि हृञ इरित्ययं ष्टो भवति । दृतिहरिः । नाथहरिः पशुः । पशाविति किम् । दृतिहारः । नाथहारः ।

फलेग्रह्यात्मम्भरिकुक्षिम्भरयः ॥ ३१ ॥

फलेग्रहि आत्मम्भरि कुक्षिम्भरि इत्येते शब्दा निपात्यन्ते । फलानि गृह्णाति फलेग्रहिः । वाच एत्वमिश्च निपात्यते । आत्मानं बिभर्त्ति आत्मम्भरिः । कुक्षिम्भरिः । वाचो मन्तत्वमिश्च निपात्यते ।

## एजेः खश् ॥ ३२ ॥

एजतेर्ण्यन्तात्खशित्ययं त्या भवति कर्म्मणि वाचि । खकारः खित्यभेरितिविशेषणार्थः । शकारो गसंज्ञार्थः । अङ्गान्येजयति अङ्गमेजयः । जनमेजयः । वाततिलसर्द्धेषु अजतुदजहातिभ्यः खश्वक्तव्यः । वातमजाः मृगाः । तिलन्तुदः काकः । सर्द्धंजहा मृगाः ।

## नासिकादौ धेट्ध्मः ॥ ३२ ॥

नासिकादिषु कर्म्मसु धेट्ध्मा इत्येताभ्यां खश भवति । नासिकान्धयति नासिकन्धयः । खरिन्धमः । नाडिन्धयः । नाडिन्धमः । मुष्टिन्धयः । मुष्टिन्धमः । घटिन्धयः । घटिन्धमः । वातन्धयः । वातन्धमः । स्तनिस्तनयोर्धेट एव स्तनिन्धयः । स्तनन्धयः । आदिशब्दः प्रकारवाची ।

## उदि कूले रुजिवहोः ॥ ३४ ॥

उदीति कास्थाने ईप् । उत्पूर्वाभ्यां रुजि वहि इत्येताभ्यां कूले कर्म्मणि खश् । कूलमुद्रुजः । कूलमुद्वहः ।

## वहाभ्रे लिहः ॥ ३५ ॥

वह अभ्र इत्येतयोः कर्म्मणोः लिहेर्डोः खश् भवति । वहंलिहा गौः । अभ्रंलिहः प्रासादः ।

## मितनखपरिमाणे पचः ॥ ३६ ॥

मितशब्दस्य पृथग्निर्देशात् परिमाणं प्रस्थादि गृह्यते। मितनखपरिमाण इत्येतेषु कर्मसु पचेर्डोः खश् भवति। मितं पचते मितंपचा कन्या। नखम्पचा यवागूः। प्रस्थम्पचा। आढकम्पचा। द्रोणम्पचा।

## विध्वरुषोस्तुदः सखम् ॥ ३७ ॥

विधु अरुस् इत्येतयोः कर्म्मणोः तुदेर्डोः खश् भवति सकारस्य च खम्। विधुन्तुदः। अरुन्तुदः।

## वाचंयमासूर्यंपश्योग्रंपश्यललाटन्तपपरंतपद्विषन्तपेरम्मदपुरन्दरसर्वंसहाः ॥ ३८ ॥

एते शब्दा निपात्यन्ते। वाक्शब्दे कर्म्मणि यमेर्डोः खो निपात्यन्ते व्रते। वाचं यच्छति वाचंयमस्तपस्वी। वाग्यामोऽन्यः। सूर्यं न पश्यति असूर्यंपश्यं मुखम्। असूर्यंपश्या राजदाराः। निपातनादसामर्थ्येऽपि नञः दृशेः खश्। उग्रं पश्यति उग्रम्पश्यः। उग्रे कर्म्मणि दृशेः खश् निपात्यते। ललाटन्तपति ललाटन्तपो भास्वान्। खश् निपात्यः परांस्तापयति परंतपः। द्विषतस्तापयति द्विषंस्तपः। परद्विषतोःकर्म्मणोस्तापेः खन्निपात्यते। तकारस्य च खं वक्ष्यतीति प्रादेशः। स्त्रियामनभिधानम्। द्विषतीतापः। इरयामाद्यति इरम्मदम्। खन्निपात्यः। पुरो दारयति पुरन्दारः। खच् वाचोमन्तता च निपात्यते। सर्वं सहते इति सर्वंसहः। खश् निपात्यः। कथं पाणयो ध्मायन्ते एषु पाणिन्धमाः पन्थान इति नासिकादौ पाणिशब्दः तत्र पाणिन्धमाः पथिकाः तात्स्थ्यात्पन्थानोऽपीत्यधिकरणे खश् न वक्तव्यः

## प्रियवशे वदः खच् ॥ ३९ ॥

प्रिय वश इत्येतयोः कर्म्मणोः वदतेः खजित्ययमन्त्यो भवति । प्रियम्वदः । वशंवदः । खकारो वागर्थम् । चकारः खचोति विशेषणार्थः । त्यान्तरकरणं किमर्थं खशि सति उत्तरत्र करोतेर्विभर्तेश्च विकरणः स्यात् । घोरेहडः प्रादेशश्च न स्यात् ।

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४० ॥

सर्व कुल अभ्र करीष इत्येतेषु वाक्षु कषतेः खच भवति । सर्वंकषो विप्रः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या । भागे दारेः खज वक्तव्यः । भगन्दरः ।

## मेघर्तिभयेषु कृञः ॥ ४१ ॥

मेघ ऋति भय इत्येतेषु कर्म्मसु करोतेः खञ् भवति । मेघङ्करः । ऋतिङ्करः । अभयाच्चेति वक्तव्यम् । अभयङ्करो जिनः । नञ्से अन्योऽर्थः प्रतीयते अणोऽपवादोऽयम् । परत्वेन हेत्वादिटस्य च बाधकः ।

## क्षेमप्रियमद्रेऽण् च ॥ ४२ ॥

क्षेम प्रिय मद्र इत्येतेषु कर्म्मसु करोतेरणित्ययं त्यो भवति खच्च वेति सिद्धे कृञो हेत्वादिष्वपि टप्रतिषेधार्थमण्ग्रहणम् । क्षेमकरः । क्षेमङ्करः । प्रियकरः । प्रियङ्करः । मद्रकरः । मद्रङ्करः ।

## आसितंभवः ॥ ४३ ॥

आसितम्भव इति निपात्यते असितशब्दे सुबन्ते वाचि भवतेर्भावकरणयोः खञ् निपात्यते आसित इति

कर्त्तरि क्तो दीर्त्वं चात एव निपातनात् आसितस्य भवनमासितम्भवो वर्त्तते । आसितो भवत्यनेनालमय-मासितम्भव ओदनः । प्रकरणान्तरविहितोयुडपि भवति । भावे घञ् समत्वादयं बाधकः ।

## भृतृवृजिधारिसहितपिदमः खौ ॥ ४४ ॥

भृ तृ वृजि धारि सहि तपि दमि इत्येतेभ्यः खु'विषये खज् भवति कर्मणि सुपि वाचि यथासम्भवमयं विधिः । विश्वम्भरा । वसुन्धरा । रथन्तरो नाम राजा । वृङ्वान्त्रो पतिंवरा कन्या । अरिञ्जयः । युगं धारयति इति युगन्धरः । खचोत्युङः प्रादेशः । सकुंसहः । सकुन्तपः । दमिरन्तर्ग-तरायर्थः । अरिन्दमः । खाविति किम् । कुटुम्बभारः ॥

## गमः ॥ ४५ ॥

खाविति वर्त्तते । सुवन्तवाचि गमेर्द्धोः खञ् भवति । सुतङ्गमो नाम कश्चित् । क्वचिदखावपोष्यते । मितंगमो श्वा । अमितङ्गमा हस्तिनी । विहायसो विहादेशः खच्च वा डिद्वक्तव्यः । विहायसा गच्छति विहङ्गः । विहङ्गमः । तुरभुजयोश्च । तुरङ्गः । तुरङ्गमः । भुजङ्गः । भुजङ्गमः ॥

## डः ॥ ४६ ॥

खाविति निवृत्तं गम इति वर्तते गमेर्डो भवति । सुवन्ते वाची अन्तादिषु वाक्षु प्रायेणाभिधानम् । अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । अन-न्तगः । गुरुतल्पगः । ग्रामगः । सर्वत्र गच्छति सर्वत्रगः । पन्नं गच्छति पन्नगः । उरसः सखश्चेति वक्तव्यम् । विहा-यसो विहं च । उरसा गच्छति उरगः । विहायसा

गच्छति विहगः । सुदुरोरधिकरणे डो वक्तव्यः । सुखेन गच्छति अस्मिन् सुगः । दुर्गः । निशोदिशोनिर्गादेशो डित्यभस्यापि डित्करणसामर्थ्यात् टेः खम् ॥

आशिषि हनः ॥ ४७ ॥

आशिष्यर्थं हन्तेर्डो भवति कर्मणि वाचि । तिमिं हन्ति तिमिहः । शापहः ॥

अपे क्लेशतमसोः ॥ ४८ ॥

अप इति कास्थाने इप् । अपपूर्वात् हन्तेः क्लेशतमसोः कर्म्मणोः वाचोः डो भवति । अनाशीरर्थो ऽयमारम्भः । क्लेशापहः । तमोपहः ॥

कुमारशीर्षयोर्णिन् ॥ ४९ ॥

कुमार शीर्ष इत्येतयोः कर्म्मणोर्हन्तेर्णिन् भवति । अशीलार्थोऽयमारम्भः । कुमारघाती । शीर्षघाती । शीर्ष-शब्दो ऽकारान्तः शिरःपर्य्यायोऽस्ति ॥

टगमनुष्ये ॥ ५० ॥

हन इति वर्त्तते । हन्तेः कर्म्मणि वाचि टग् भवति अमनुष्ये कर्त्तरि । पित्तं हन्ति पित्तघ्नं घृतम् । श्लेष्मघ्न-मौषधम् । जायाघ्नस्तिलकः । पतिघ्नी रेखा । अमनुष्य इति किम् । पापघातस्तपस्वी । चौरघातो हस्तीत्यत्र युडो बहुलमिति बहुलवचनादण् ॥

जायापत्योर्लक्षणे ॥ ५१ ॥

लक्षणं चिह्नं तदस्यास्तीति लक्षणः। अर्शआदिपाठादः।

जाया पति इत्येतयोः कर्म्मणोर्हन्तेर्लक्षण वति कर्तरि टग्भवति । जायाघ्नो ब्राह्मणः । लक्षणमस्य तद्विधमस्ति पतिघ्नी कन्या ॥

## शक्ति हस्तिकवाटे ॥ ५२ ॥

शकनं शक् शक्तिरित्यर्थः । हस्ति कवाट इति एतयोः कर्म्मणोः हन्तेष्टग् भवति शक्ति गम्यमानायाम् । अयं पूर्वश्च मनुष्यकर्तृकार्थ आरम्भः । हस्तिनं हन्ति हस्तिघ्नो मनुष्यः । हस्तिनं हन्तुं शक्त इत्यर्थः । कवाटघ्नो मनुष्यः । शक्तीति किम् । हस्तिघातो व्याधः उपायेन ॥

## पाणिघताडघराजघाः ॥ ५३ ॥

एते शब्दा निपात्यन्ते । पाणिघताडघौ शिल्पिनि निपात्येते । अन्यत्र पाणिघातः ताडघातः । राजघ इत्यविशेषेण । टग्घत्वं टित्वं च निपात्यम् ॥

## सुभगाढ्यस्थूलपलितनग्नान्धप्रियेष्वच्व्यौ स्नुखुकञौ भुवः ॥ ५४ ॥

अच्व्याविति च्व्यन्तप्रतिषेधात् । नञिवयुक्तन्यायेन अर्थविज्ञानम् । अच्व्यन्तेषु च्व्यर्थे वर्तमानेषु सुभगादिषु वाक्षु भवतेः स्नुख् खुकञ् इत्येतौ त्यौ भवतः । असुभगः सुभगो भवति सुभगम्भविष्णुः सुभगम्भावुकः । आढ्यम्भविष्णुः । आढ्यंभावुकः । स्थूलम्भविष्णुः । स्थूलम्भावुकः । पलितम्भविष्णुः । पलितम्भावुकः । नग्नम्भविष्णुः । नग्नम्भावुकः । अन्धम्भविष्णुः । अन्धम्भावुकः ।

प्रियम्भविष्णुः । प्रियम्भावुकः । अत्र तदन्तविधिरिष्टः । श्रीसुभगम्भविष्णु । श्रीसुभगम्भावुकः । अचाविति किम् । सुभगीभविता । आढ्यीभविता । नञ्निर्दिष्टे सदृशसंप्रत्ययादिह न भवति सुभगो भविता ॥

## कृञः करणे ख्युट् ॥ ५५ ॥

कृञः करणे कारके ख्युट् भवति अच्व्यन्तेषु च्व्यर्थे वर्तमानेषु सुभगादिषु वाक्षु । असुभगं सुभगं कुर्वन्त्यनेन सुभगङ्करणम् । आढ्यङ्करणम् । स्थूलङ्करणम् । पलितङ्करणम् । नग्नङ्करणम् । अन्धङ्करणम् । प्रियङ्करणम् । सुभगङ्करणी विद्या । अच्व्यन्तेषु इत्येव । सुभगीकुर्वन्त्यनेन नन्वत्र ख्युटि युटि वा नास्ति विशेषः । सत्यम् । अच्व्यन्तानुवृत्तेस्तु युटोऽप्यत्र प्रतिषेधः । च्व्यर्थे वर्तमानेष्वित्येव । आढ्यं कुर्वन्ति तैलेन । अभ्यञ्जयतीत्यर्थः ॥

## स्पृशोऽनुदके क्विः ॥ ५६ ॥

उदकवर्जिते सुपि वाचि स्पृशेर्धोः क्विर्भवति । ककारः कित्कार्यार्थः । वकारः सति साम्ये क्विपा बाधनार्थः । मन्त्रेण स्पृशति मन्त्रस्पृक् । दलं स्पृशति दलस्पृक् । व्रश्चादिसूत्रेण षत्वं जश्त्वं क्वित्यस्य कुरिति कुत्वम् । अनुदक इति किम् । उदकं स्पृशति उदकस्पर्शः ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चः ॥ ५७ ॥

ऋत्विक् दधृक् स्रक् दिक् उष्णिक् इत्येते क्यन्ता निपात्यन्ते । अञ्चु युजि क्रुञ्च इत्येतेभ्यस्तु क्विर्भवति । ऋतौ यजते ऋतुप्रयोजनो वा यजते ऋत्विक् । ऋतुशब्दे वाचि यजेः क्विर्निपात्यते । धृष्णोतीति दधृक् । धृषेः

क्विड्वित्वं च निपात्यते । स्रजन्ति तामिति स्रक् । सृजेः कर्म्मणि किरमागमश्च निपात्यः । दिशन्ति तामिति दिक् । दिशेः कर्म्मणि क्विः । उत्स्निह्यतीति उष्णिक् । उत्पूर्वात् स्निहः ण्यन्तत्वं षत्वं च उष्णीषेण नह्यतीति वा उष्णिक् । षत्वं प्रश्च । अञ्चु । प्राङ् । दध्यङ् । सबन्तमान्ते क्विर्भवति । युजेः केवलादेव क्विः । युङ् । युञ्जौ । युञ्जः । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुञ्चेरपि केवलात् क्विः । नत्वं न भवति । स एष विशेषो निपातनैः सह निर्देशाल्लभ्यते ॥

## त्यदादौ दृशोऽनालोके टक् च ॥ ५८ ॥

त्यदादिषु वाक्षु दृशेर्धोरनालोकेऽर्थे टग् भवति क्विश्च आलोकश्चक्षुर्विषयः पर्युदस्यति । त्यादृक् । त्यादृशः । दृशादृग्दृक्षवताविति निर्देशात्कोऽपि भवति । त्यादृक्षः । आसर्वनाम्न इत्यात्वम् । एवं तादृक् । तादृशः । तादृक्षः । यादृक् । यादृशः । यादृक्षः । रूढिशब्दा एते टे तेष्वव-यवार्थोऽस्ति तमिव पश्यति अथवा स इव दृश्यते इति यथा कथंचिद्वाक्यम् । समानान्ययोश्चेति वक्तव्यम् । सदृशः । सदृक् । सदृक्षः । अन्यादृक् । अन्यादृशः । अन्यादृक्षः । दृशादृग्दृक्षवताविति समानस्य सभावः । अनालोक इति किम् । यं पश्यति यद्दर्शः तद्दर्शः ।

## सत्सूद्विषद्रुहद्रुहयुजविदभिदच्छिदजिनी-राजो गावपि क्विप् ॥ ५९ ॥

सदादिभ्यो धुभ्यः क्विप् भवति गौ वाचि अपि शब्दात् सुबन्तेऽपि । प्रसत् । दिवि सीदतीति द्युसत् । अन्तरिक्षसत् । सूइति द्विषा सहचरितः आदादिकः ।

प्रसूते प्रसूः । अण्डं सूते अण्डसूः । शतसूः । गर्भसूः । विद्वेष्टीति विद्विट् । मित्रद्विट् । प्रद्रुह्यतीति प्रध्रुक् । मित्राय द्रुह्यति मित्रध्रुक् । प्रदोग्धि प्रधुक् । युजिर् योगे युज समाधाविति चाविशेषेण ग्रहणम् । प्रयुनक्ति प्रयुक् । अश्वयुक् । युजेरार्यतस्याऽपि युज इति निपातनात् णरूप् प्रयोजयतीति प्रयुक् । अश्वान् योजयति । अश्वयुक् । विदेरविशेषेण ग्रहणम् । प्रवित् । धर्मवित् । प्रभित् । बलभित् । प्रच्छित् । रज्जुच्छित् । प्रजित् । कर्मजित् । प्रणीः । ग्रामणीः । विराजते विराट् । सम्राट् । मन्वन्क्वनिब्विचः क्वचित् । क्विबिति क्विपि सिद्धे नियोगार्थमिदम् । सुपीति वर्तमाने णिग्रहणं किमर्थम् । अन्यत्रसुद्ग्रहणे निग्रहाणां नास्तीति ज्ञापनार्थम् । तेन वदः सुपि क्यप् चेति णो क्यन्न भवति । प्रवाद्यमनुवाद्यम् ॥

## अदोऽनन्ने ॥ ६० ॥

अदेर्धोः क्विप् भवति अनन्ने सुवन्ते वाचि । आममत्ति आमात् । दृत्तात् । अन्न इति किम् । अन्नादः ॥

## क्रव्ये ॥ ६१ ॥

क्रव्यमाममासं क्रव्यशब्दे वाचि अदेः क्विप् भवति । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे पुनरारम्भः असरूपस्याणो बाधकः । कथं तर्हि क्रव्यादः पृषोदरादिषु कृत्तविकृतादः क्रव्याद इति द्रष्टव्यम् ॥

## मन्वन्क्वनिब्विचः क्वचित् ॥ ६२ ॥

मन् वन् क्वनिप् विच् इत्येते त्याः क्वचिद् दृश्यन्ते । णावपीत्यनुवर्तते । सुशर्म्मा सुवर्म्मा । कृदिति वचनात्

केवलादपि । दामा । पामा । वामा । हेमा । वन् । विजावा । अग्रेगावा । घना इत्यतवम् । क्वनिप् । प्रातरित्वा । प्रातरित्वानौ । केवलादपि । कृत्वा । कृत्वानौ । वोपा । पीवा । विच् । विशतीति वेट् । रेट् । वकारः कृत्कार्यार्थः । इकार उच्चारणार्थः । चकारः एवर्थः जागर्ति जागः । विरित्युच्यमाने जागुरविजिणिङ्तीति एप्प्रतिषेधः शक्येत ॥

क्विप् ॥ ६३ ॥

क्विप् धोः क्वचिद्दृश्यते गावपि गावपि उखेन स्रंशते उखास्रत् । वाहात् भ्रश्यति वाहभ्रट् । अनस्यापीति दीत्वम् । क्वचिदधिकारात्केवलादपि । याति याः । वाति वाः ॥

स्थः कः ॥ ६४ ॥

गावपीति वर्तते । तिष्ठतेः को भवति शन्तिष्ठति शंस्थः । सुस्थः । ननु सुपि स्थ इत्यनेनैव कः सिद्धः । न सिद्ध्यति । शमीधोः खावित्यत्र धुग्रहणस्य प्रयोजनमुक्तं समत्त्वेन पूर्वस्य कस्य बाधनमिति । यथा शङ्करा परिव्राजिकेत्यत्र हेत्वादिलक्षणस्य टस्य बाधात्कस्याकारस्य बाधनार्थं पुनः कविधानं त्वियो समत्वादस्त्यो न बाधक इति पूर्वेण क्विप्सिद्धः । शंस्थाः ॥

भजो णिवः ॥ ६५ ॥

भजतेर्णिवर्भवति सुपि गावपि । अर्द्धभाक् । प्रभाक् । णकार ऐवर्थः । वकारः सति साम्ये बाधार्थः । इकारः उच्चारणार्थः । समत्वेन क्विविचोर्बाधकोऽस्ति णिवः ।

सुपि णीलेऽजातौ णिन् ॥ ६६ ॥

चतुष्टयी शब्दानां प्रवृत्तिरित्यस्मिन् दर्शने जाति प्रतिषेधोऽयम् । अजातिवाचिनि सुबन्ते वाचि शीले गम्यमाने धेर्णिन्भवति । सुपीति वर्त्तमाने पुनः सुपग्रहणं सुम्मात्रार्थम् । अन्यथा अजाताविति सत्ववाचिनः प्रतिषेधादन्यस्यापि सत्ववाचिनो ग्रहणं स्यात् । उष्णं भुंक्ते इत्येवंशीलः उष्णभोजी । उदासारिण्यः । प्रत्यासारिण्यः अजाताविति किम् । शालीन भुङ्क्ते इत्येवं शीलः शालिभोजः । साधूनामन्त्रयिता । शील इति किम् । उष्णभोजः आतुरः । क्वचिदित्यनुवृत्तेः साधुकारिण्यप्यर्थे णिन् । साधुकारी साधुदायी । ब्रह्मणि वदेः णिन् वक्तव्यः । असमस्याणो बाधकः । ब्रह्मवादिनो वदन्ति ॥

## कर्त्तरी वे ॥ ६७ ॥

कर्तरि वाचि इवार्थे धेर्णिन् भवति । उपमानभूते कर्तरीत्यर्थः । जात्यर्थं शीलार्थं चेदम् । उष्ट्र इव क्रोशते उष्ट्रक्रोशी । ध्वांक्षरवी । खरनादी । सिंहनर्दी । वृत्त्येवार्थस्योक्तत्वादिवशब्दस्याप्रयोगः । कर्त्तरीति किम् । तिलानिव भुक्ते कोद्रवान् । इव इति किम् । उष्ट्रः क्रोशति ॥

## व्रते ॥ ६८ ॥

सुबन्ते वाचि धेर्णिन् भवति । समुदायेन व्रतं गम्यते । शास्त्रपूर्वको नियमो व्रतम् । पार्श्वशायी । स्थण्डिलशायी । वृक्षमूलवासी । श्राद्धं न भुंक्ते व्रतमस्मा अश्राद्धभोजी । अलवणभोजी । सापेक्षस्यास्यापि नञो वृत्तिर्व्याख्याता । व्रत इति किम् । स्थण्डिले शेते कामचारेण ॥

## प्रायोऽभीक्ष्ण्ये ॥ ६९ ॥

सुबन्ते वाचि धोराभीक्ष्णे गम्ये प्रायो णिन् भवति। शीलं गुणान्तरे द्वेषः। तत्तन्मुहुर्मुहुः सेवनमाभीक्ष्णम्। कषायपायिणो गांधारयः। सौवीरपायिणो इपिलाः। तक्रपायिणो अन्ध्राः। क्षारपायिण उसीनराः। मृदन्तं तुम्बिभक्ताविति। णत्वं प्रायोग्रहणादिह न भवति। कुल्माषखादाश्चोलाः॥

मनः॥ ७० ॥

मन्यतेः सुपि वाचि णिन् भवति। अशीलाद्यर्थमेतत्। शोभनं मन्यते परं शोभनमानी दर्शनीयमानी। मन इति श्यविकरणस्य ग्रहणं व्याख्यानात्। उत्तरत्र खशि विशेषो भविष्यति॥

खश्चात्मनः॥ ७१ ॥

आत्मनो यत्सुवन्तं तस्मिन् वाचि मन्यतेः खश भवति णिश्च। शोभनमात्मानं मन्यते शोभनंमन्यः। शोभनमानी पण्डितमानी॥

भूते॥ ७२ ॥

भूत इत्यधिकारो वेदितव्यः। धोरिति वर्तते। अर्थवशाद्भूते ध्वर्थे वक्ष्यमाणा विधयो भवन्तीत्यर्थः। वक्ष्यति दृशेः क्वनिप्। मेरुं दृष्टवान् मेरुदृश्वा। भूत इति किम्। मेरुं द्रक्ष्यति। न च भूतशब्दस्येतरेतराश्रयत्वेनासिद्धिः, अनादित्वाच्छब्दव्यवहारस्य। भूत इति निसंज्ञको वा शब्दः। इयन्त इति संख्यानं निसञ्ज्ञानां न विद्यते। प्रयोजनवशादेते निपात्यन्ते पदे पदे॥ १ ॥

करणे यजः ॥ ७३ ॥

णिन्निति वर्त्तते । करणे सुबन्ते वाचि यजेर्द्धो; भूते णिन् भवति । अग्निष्टोमेन यजते अग्निष्टोमयाजी । वाजपेययाजी । विशेषणस्य करणत्वं यजनसामान्यं यजेरर्थः ॥

कर्म्मणि हनः ॥ ७४ ॥

कर्म्मणि वाचि हन्ते र्णेन् भवति भूते । पितृव्यं हतवान् पितृव्यघाती । मातुलघाती । कुत्साविशेष इति वक्तव्यमिह मा भूत । देवदत्तं हतवान् देवदत्तघातः ॥

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ७५ ॥

ब्रह्म भ्रूण वृत्र इत्येतेषु कर्म्मसु हन्तेः क्विप् भवति । ब्रह्माणं हतवान् । ब्रह्महा । भ्रूणहा । वृत्रहा । सामान्येन क्विपि सिद्धे नियमार्थमिदम् । ब्रह्मादिष्वेव कर्मसु हन्तेः क्विन्नान्यस्मिन् । मित्रं हतवान् मित्रघातः । उभयथा नियमश्चायम् । ब्रह्मादिषु कर्म्मसु भूते क्विवेव नान्यस्त्यः । उभयथा शिष्यैः प्रतिपन्नत्वात् उभयथा नियमो लभ्यते । कथं मधुहा चिन्त्यमेतत् । हन इत्येव । ब्रह्मार्णं कृतवान् । भूत इत्येव । ब्रह्मणं हन्ति हनिष्यन्ति वा ॥

सुकर्म्मपापमन्त्रपुण्ये कृञः ॥ ७६ ॥

क्विविति वर्तते । सुशब्दे वाचि कर्म्मादिषु च करोतेः क्विप् भवति भूते । सुष्ठु कृतवान् सुकृत् । कर्मकृत् । पापकृत् । पुण्यकृत् । एषोऽप्युभयथा नियमः । स्वादिष्वेव वाक्षु कृञः क्विप् भवति नान्यस्मिन् । सूत्रं कृतवान् सूत्र-

कारः । स्वादिषु च भूते क्विबेव नान्यस्त्यः । कृञ इति किम् । पापं चितवान् । भूत इत्येव । कर्म करोतीति कर्म्मकारः । स्वादिष्वेव भूते क्विप्भवतीति नायमिह नियम इत्येके । तेन भाष्यकृत् शास्त्रकृत् तीर्थकृदित्येवमादि सिद्धम् । वर्तमानकालविवक्षा वा तेनानियमः ॥

सोमे सुञः ॥ ७७ ॥

सोमे कर्म्मणि सुनोतेः क्विप्भवति भूते । सोमं सुतवान् सोमसुत् । सोमसुतौ । सोमसुतः । एषोऽप्युभयथा नियमः । सोम एव वाचि सुनोतेः क्विन्नान्यस्मिन् । सुरां सुतवान् सुरासावः । सोमे वाचि भूते क्विबेव नान्यस्त्यः । सुञ इति किम् । सोमं कृतवान् । भूत इत्येव । सोमं सुनोति सोमसावः ॥

अग्नौ चेः ॥ ७८ ॥

अग्नौ कर्म्मणि चिनोतेः क्विर्भवति भूते । अग्निं चितवान् अग्निचित् । अग्निचितौ । अग्निचितः । अयमप्युभयथा नियमः अग्नावेव वाचि नान्यस्मिन् । कुड्यं चितवान् कुड्यचायः । अग्नौ वाचि भूते क्विबेव नान्यस्त्यः । चेरिति किम् । अग्निं कृतवान् । भूत इत्येव । अग्निं चिनोति अग्निचायः ॥

कर्म्मण्यग्न्याख्यायाम् ॥ ७९ ॥

कर्मणीति प्रकृतं वर्त्तते । कर्म्मणि वाचि चिनोतेः कर्म्मणि कारके क्विप्भवति समुदायेन चेदग्न्याख्या गम्यते । श्येन इव चितः श्येनचित् । काक इव चितः काकचित् ।

रथचक्रचित् । आख्या ग्रहणं किमर्थं रूढेः परिग्रहार्थम् । अग्न्यर्थं इष्टकाचयः श्येनचिदुच्यते ॥

कर्म्मणोऽिन्विक्रियः ॥ ८० ॥

वाचि इन्नित्ययं त्यो भवति । विपूर्वात् क्रीणातेः । कर्मणीति वर्तमाने पुनः कर्मग्रहणमभिधेयनिवृत्त्यर्थम् । कर्मणि वाचि कर्त्तरि कारके यथा स्यात् । तैलं विक्रीतवान् तैलविक्रयी । घृतविक्रयी । कुत्सायामिति वक्तव्यम् । इह न भवति । धान्यविक्रायः ॥

दृशेः क्वनिप् ॥ ८१ ॥

भूते कर्मणीति च वर्त्तते । कर्मणि वाचि दृशेर्धोः क्वनिप्भवति । मेरुं दृष्टवान् मेरुदृश्वा । विश्वदृश्वा । पित्करणमुत्तरार्थम् । सामान्येन क्वनि प्रे सिद्धे पुनर्वचनं भूते मन्वन्विचां निवर्तकम् ॥

राज्ञि युधि कृञः ॥ ८२ ॥

राजशब्दे कर्मणि युधिकृञ् इत्येताभ्यां क्वनिप्भवति। युधिरन्तर्भावितण्यर्थः सकर्मकः । राजयुध्वा । राजकृत्वा अयमपि योगः मन्वन्विचां निवृत्त्यर्थः । कर्मणीत्येव । राज्ञा युद्धवान् ॥

सहे ॥ ८३ ॥

सहशब्दे वाचि युधिकृञित्येताभ्यां क्वनि भवति भूते । सह युद्धवान् सहयुध्वा । सहकृत्वा । वानीच इत्यत्र न्यगवयवस्य वसस्य ग्रहणात् सहशब्दस्य सभावो न भवति । योगविभागो यथासंख्यनिवृत्त्यर्थः ॥

जनेर्डः ॥ ८४ ॥

सुपि शील इत्यतः सुपीति संबध्यते । जनेर्डीः सुपि वाचि ड इत्ययं त्यो भवति । उपसरे जातः उपसरजः । मन्दुरायां जातः मन्दुरजः । त्वेघायोः क्वचित् रवौ चेति प्रादेशः । बलभीजः । कायामजातावभिधानम् । जाड्याज्जातं जाड्यजन्दुःखम् । सन्तोषजं सुखम् । सङ्कल्पजः कामः । बुद्धिजः संस्कारः । अजाताविति किम् । मृगाज्जातः । हस्तिनो जातः । गौ वाचि खुविषये प्रजाताः प्रजाः अनौ कर्मणि वाच्यभिधानम् । पुमांसमनुजातः पुमनुजः । स्त्र्यनुजः । अन्यस्मिन्नपि वाचि दृश्यते कारकान्तरेऽपि । किञ्जाता नञ्कुञः । अलं जातेन अलञः । द्विर्जाता द्विजः । न जातः अजः । कायामजातावित्युक्त जातावपि दृश्यते ब्राह्मणजः पशुबधः । क्षत्रियजं युद्धम् । गौ वाचि खावित्युक्तः अखावपि दृश्यते । अधिजातः । अधिजः । अभिजः । परिजः । अनौ कर्मणीत्युक्तम् । अकर्मण्यपि दृश्यते । अनुजातः अनुजः । यद्यपि विशेषेण सुपीत्युच्यते इहापि प्राप्नोति सर्वाङ्गपरिपूर्णो जातः अहस्थो जातः अनभिधानान्न भवति । युक्ता बहुलमिति बहुलवचनात् । कर्मणि कारके अन्यस्मादपि भवति परिखाता परिखा । पुंसा अनुजातः पुंसानुप्रकरणे पुंसानुजो जनुषान्ध इत्यत्रानुर्घद्यव्वते ॥

तः ॥ ८५ ॥

तसंज्ञस्त्यो भवति धोर्भूते । इह वाग्विशेषपरिग्रहो नास्ति कृतम् । कृतवान् । भुक्तम् । भुक्तवान् । क्तक्तवतो-

भाविनोः तसंज्ञाश्रिता तेन संज्ञया त्यविधाने इतरेतरा-श्रयं नास्ति । आदिकर्मण्यपि कथं चित् भूतत्वमस्ति । प्रकृतः कटं देवदत्तः । प्रकृतवान् कटं देवदत्तः ॥

सुयजोर्वनिप् ॥ ८६ ॥

सुपीति निवृत्तम् । सु यजि इत्येताभ्यां वनिप् भवति भूते । सुतवान् । सुत्वा । इष्टवानिति यज्वा ॥

जृषोऽतृ ॥ ८७ ॥

जीर्यतेरतृ इत्ययं त्यो भवति भूते । जरन् । जरन्तौ । जरन्तः । क्तक्तवतोरसमत्वाद्बाधकोऽयम् ॥

वस्सदिणो वसुर्लिण्मम् ॥ ८८ ॥

वस् सद् इण् इत्येतेभ्यः भूते वसुर्भवति लिड्वन्म-संज्ञश्च । अनूषिवान् श्रीदत्तं धान्यसिंहः । उपसेदिवान् उपाध्यायं शिष्यः। ईयिवान् उपेयिवान् उपाध्यायं शिष्यः। इणं क्रादिनियमादिटि द्वित्वम् । धरूपस्य यणोत्योरिति यणादेशः । वस्य कितोणो दीरिति दीत्वम् । अथ क्रादि-नियमलक्षणस्येटः वसीतिप्रतिषेधः कस्मान्न भवति उत्तरत्र स्तुवोर्निङित्यनिट्वचनं ज्ञापकं वसीतिप्रतिषेधो न भवति। उदात्तस्य वासप्रतिषेधः लिड्वदतिदेशाद्द्वित्वम् । न ञ्मित-लोकेत्यादिना कर्म्मणि ताप्रतिषेधकश्च भवति । मसं-ज्ञायाः किं प्रयोजनं कर्म्मव्यतिहारे मा भूत् । व्यत्यये जन-पद इति प्राक्तेर्वासम इति लुङादयोऽपि भवन्ति । अन्ववात्सीत् । अन्ववसत् । अनूवास । उपासदत् । उपासीदत् । उपससाद । उपागात् । उपैत् । उपेयाय । क्सुकानौ लिडादेशौ सर्वधुभ्य इत्येके । क्सुर्लोममिति

मसंज्ञकः । कानस्य ङ्डानं द इति संज्ञा । भावकर्म्मकर्तृषु च सम्भवः । लिङादेशत्त्वादेव कित्त्वे सिद्धे इफातार्थं कित्करणमनयोः । अञ्जेः अञ्जितवान् । खञ्जेः खखजान इति कित्वान्नखं सिद्धम् । ऋकारान्तस्य एप्प्रतिषेधार्थं च कित्करणं तितीर्वानः । ऋच्छतॄनामित्येन्न भवति । कर्मणि ततिराणः । ऋतइद्धोरिति इत्वस्य द्वित्वे चीति स्थानिवद्भाव तृइति द्वित्वं । र इति अत्वम् । तैरेवाचार्यैः वस्वेकाजाद्यसामिङिति वसौनरतः । एकाचामाकारान्तानां घसेश्चेति विहितमेविचान् । पविवान् । जग्निवान् । इह कस्मान्न भवति बिभिद्वान् चिच्छिद्वान् हलाद्येलिघते इत्यनेन एत्वचरवयोर्वासौ य एकाच् तत्रैवेट् भवति यद्येवं ययिवानित्यत्रापि इटि चात् स्वमिति स्व एकात्वमस्तीति आद्ग्रहणमनर्थकं नियमार्थमेतत् यथा मिणिनमित्तमेकाच्त्वं तेषामाकारान्तानामेव इड्भवति नान्येषां च खन्वानिति । अत्रापीटि कृते उङ खे क्रियमाणे एकाचसम्भवोऽस्ति अत एव नियमात् घसेरिच्प्राप्ते ग्रहणम् । तथा वा दृशिगमहनविद्विशाम् । ददृशिवान् । ददृश्वान् । जग्मिवान् । जगन्वान् जघ्निवान् । जघन्वान् । मो नः स्वोरिति मकारस्य नत्वम् । दृशेरनेकाच्त्वात् गमहनोरातइति नियमात् इट्यप्राप्ते विभाषा वासौ परतौ वदेः शब्विकरणस्य ग्रहणम् । विविदिवान् । विविद्वान् । ज्ञानार्थस्य ग्रहणे तेर्यस्य वेति प्रतिषेधः स्यात् । विविशिवान् । विविश्वान् ॥

श्रुवोऽनिट् ॥ ८९ ॥

श्रु इत्येतस्माद्वसुर्भवत्यनिट् । उपशुश्रुवान् श्रीदत्तं धान्यसिंह: । असमत्वाद्यण्लङादयोऽपि उपाशृणोत् । उपशुश्राव ॥

अनाश्वानानूचानौ ॥ ९० ॥

अनाश्वान अनूचान इत्येतौ शब्दौ निपात्येते । नञ्पूर्वादश्नातेः वसुर्लिड्वदिड्भावश्च निपात्यते । अनाश्वांस्तपश्चकार । असमत्वात् नाश्नात् नाश इत्यपि भवति । वचेरनुपूर्वात् कर्तरि कानो निपात्यते । अनूचानो व्रतोपपन्नः । असमत्वात् अनूक्तवान् अन्ववोचत् अनूवाच इति च भवति ॥

लुङ् ॥ ९१ ॥

लुङ् इत्ययं त्यो भवति भूते धोः । अकार्षीत् अहार्षीत् । क्व भवानुषितः । अमुत्रावात्समिति । अत्र भूतमात्रस्वबद्धयोक्त एवमिति लङ् न भवति ॥

अनद्यतने लङ् ॥ ९२ ॥

भूत इति वर्तते । अविद्यमानाद्यतने भूते धोर्लङ् भवति । अतीताया रात्रेः आ पश्चिमयामात् आगामिन्याश्च रात्रेराप्रथमयामात् अद्यतनकालः । तत्प्रतिषेधादनद्यतनः । अकरोत् । अहरत् । अनद्यतनभूतविवक्षायाः समत्वाल्लुङो बाधको लङ् । अनद्यतन इति बसनिर्देशादद्याद्यतनगन्धोऽप्यस्ति तत्र लङ् न भवति । अद्य ह्यश्वाभुद्महि यद्दिवसः अद्यतनेऽप्यद्यतनो नास्तीति लङ्प्राप्नोति नायं दोषः । विशेषाद्यतने सामान्याद्यतनस्य विद्यमानत्वात् ।

इह भूतमात्रं विवक्षितम्। आगच्छाम घोषात् अपिबाम पय इति परोक्षे लोकविज्ञाते प्रयोक्तुः शक्यदर्शनत्वेन दर्शनविषये लङ् वक्तव्यः । अरुणन्महेन्द्रो मथुराम् । अरुणद्यवनः साकेतम् । परोक्षे इति किम् । उदगादादित्यः । लोकविज्ञात इति किम् । जगाम ग्रामं देवदत्तः । प्रयोक्तुः दर्शनविषय इति किम् । जघान कंसं किल वासुदेवः ॥

## अयद्यभिज्ञोक्तौ लृट् ॥ ९३ ॥

अभिज्ञोक्तिः स्मृतिवचनम् । अविद्यमाने यच्छब्दे अभिज्ञावचने वाचि अनद्यतने लृट् भवति। अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः मद्रेषु वत्स्यामः । उक्तिग्रहणं पर्यायार्थम् । स्मरसि बुध्यसे चेतयसे वा कश्मीरेषु वत्स्यामः । लङोऽपवादोऽयम् । अयदीति किम् । अभिजानासि देवदत्तः यत् कश्मीरेष्ववसामः ॥

## न वा साकाङ्क्षे ॥ ९४ ॥

आकांक्षा सम्बन्धः अनद्यतन इत्येव साकाङ्क्षे अभिज्ञावचने वाचि धोर्न वा लृड भवति । अयद्यभिज्ञावचने पूर्वेणाप्राप्तो लृट् नेति प्रतिषिध्यते ततः केवले यच्छब्दसहिते चाभिज्ञावचने साकांक्षे वाचि वेति सर्वत्र विभाषा । अभिजानासि देवदत्तः काश्मीरेष्ववत्स्यामः कश्मीरेष्ववसाम तत्रौदनान् भोक्ष्यामहे तत्रौदनानभुंज्महि । यच्छब्दसहिते अभिजानासि देवदत्त यत् कश्मीरेषु वत्स्यामः यत्तत्रौदनान् भोक्ष्यामहे यत्तत्रौदनानभुञ्ज्महि ॥

## परोक्षे लिट् ॥ ९५ ॥

भूते अनद्यतने इति च वर्तते । परावृत्तोऽक्षेभ्यः परोक्षः इन्द्रियागोचर इत्यर्थः । परोक्षशब्दस्य चेदमेव निपातनम् । भूतानद्यतनपरोक्षेऽध्वर्थे लिट् भवति । यद्यपि सर्वो ध्वर्थः साध्यत्वेनानुमेयत्वेन वा परोक्षस्तथापि यत्राश्रयद्वारेण प्रत्यक्षाभिमानो नास्ति लोकस्य स परोक्ष उक्तः । पपाच । चकार । आत्मनानुष्ठिता हि क्रिया सर्वस्य प्रत्यात्मं प्रत्यक्षेति सुप्तमत्तमसूमदः प्रयोगः । सुप्तोऽहं किल विललाप मत्तोऽहं किल जघान । अत्यन्तापह्नवे लिट् वक्तव्यः । नाहं कलिङ्गं जगाम । कलिङ्गगमनस्य प्रत्यक्षत्वाल्लिडप्राप्तः ॥

## हशश्वतोर्लङ् च ॥ ९६ ॥

ह शश्वदित्येतयोर्वाचोर्लङ् भवति लिट् च भूतानद्यतनपरोक्षे । इति हाकरोत् । इति ह चकार । शश्वदकरोत् । शश्वच्चकार ॥

## प्रश्ने चान्तर्युगे ॥ ९७ ॥

प्रष्टव्य इति प्रश्नः । पञ्चवर्षं युगम् । युगाभ्यन्तरे प्रश्ने भूतानद्यतने परोक्षे लङ्लिटौ भवतः । चकारः किमर्थः पूर्वसूत्रे चानुकृष्टस्य लिटोऽनुकर्षणार्थः । किमगच्छस्त्वं पाटलिपुत्रम् । अददादसौ दानम् । ददावसौ दानम् । प्रश्न इति किम् । देवदत्तो जगाम । अन्तर्युग इति किम् । अहं त्वां पृच्छामि । जघान कंसं किल वासुदेवः ॥

## पुरि लुङ् वा ॥ ९८ ॥

पुराशब्दो भूतानद्यतने वर्त्तते न भूतमात्रे । पुराशब्दे वाचि भूतानद्यतने वा लुङ् भवति पक्षे यथाप्राप्तं च । अवात्सुरिह पुरा छात्राः । अवसन्निह पुरा छात्राः । परोक्षविवक्षायां लिडपि भवति । ऊषुरिह पुरा छात्राः ॥

## लट् ॥ ९९ ॥

वेति निवृत्तम् । लड् भवति पुराशब्दे वाचि भूतानद्यतने । वसन्तीह पुरा छात्राः । योगविभाग उत्तरत्र लट एवानुवर्तनार्थः ॥

## स्मे ॥ १०० ॥

स्मशब्दोऽप्यनद्यतने परोक्षे च वर्तते न भूतमात्रे । स्मशब्दे वाचि अनद्यतने लट् भवति । इति स्मोपाध्यायः कथयति । स्त्रयं प्रभार्थं युध्यन्ते स्म विद्याधराः । लट्लिटोरपवादोऽयम् । स्मपुराशब्दयोर्युगपत्प्रयोगे परत्वात् स्मलक्षणो लट् । सुलोचनार्थं पुरा युध्यन्ते स्म पार्थिवाः । हशश्वल्लक्षणादपि विधिः परत्वेन स्मलक्षणः । इतिहाधीयते स्म । शश्वदधीयते स्म । तथा हशश्वल्लक्षणात् परत्वेन पुरालक्षणो विधिः । इति ह पुरा अध्यगीषत । शश्वत्पुरा-अध्यगीषत । ननौ पृष्टप्रतिवचने भूतमात्रे लट् वक्तव्यः । अकार्षीः कटं देवदत्त ननु करोमि भोः । तथा नशब्दे नुशब्दे च वाचि पृष्टप्रतिवचने भूते वा लट् वक्तव्यः । अकार्षीः कटं देवदत्त न करोमि भोः नाकार्षं भोः । अहं नु करोमि अहं न्वकार्षम् । नेदं द्वयं वक्तव्यम् । पूर्वत्र

क्रियाया आपरिसमाप्तेर्वर्तमानत्वमुत्तरत्रासमाप्तिः समाप्तिश्च क्रियाया विवक्षिता ॥

### सम्प्रति ॥ १०१ ॥

ध्वर्थे लट् भवति आरम्भात्प्रभृत्या उपरमाद्वर्तमानः कालः सम्प्रति इत्युच्यते । उक्तं च आरम्भाय प्रसृता यस्मिन् काले भवन्ति कर्त्तारः कार्यस्यानिष्ठातस्तन्मध्यं कालमिच्छन्ति । तरति । नयति । याति ॥

### तस्य शतृशानावत्रैकार्थ्ये ॥ १०२ ॥

तस्य सम्प्रतिकाले विहितस्य लटः स्थाने शतृ शान इत्येतावादेशौ भवतः न चेद्वान्तेन एकार्थ्यं भवति। पचन्तं पश्य । पचता कृतम् । पचमानेन कृतम् । तस्य ग्रहणं किम् । असम्प्रतिकाले विहितस्य लटः स्थाने मा भूत् । उष्यते इह पुरा छात्रैः । अधीयते स्म नटैः । अत्रैकार्थ्ये इति किम् । पचति देवदत्तः । अत्र तस्य शतृशानाविति योगविभागः कर्त्तव्यः । न वा साकाङ्क्ष इत्यतो मण्डूकप्लुत्या नवाग्रहणं चाभिसम्बन्धनीयम् । ततो नेत्यनेन इतिशब्दयोगे प्रतिषेध एव भवति । वर्षतीति धावति । हन्तीति पलायते । वेति व्यवस्थितविभाषा । तेन इतिवादिभिर्योगेर्थाभिन्नाधिकरणेषु च हृत्सु नित्यो विधिः। कुर्वती भक्तिः। कुर्वद्भक्तिः । कौर्वतः । पाचमानः । भक्तिशब्दः प्रियादौ पठ्यते तेन पुंवद्यजातीयदेशीय इति पुंवद्भावः । समानाधिकरणेषु हृत्सु विकल्पः । कुर्वत्तरः । कुर्वद्रूपः । कुर्वाणरूपः । करोतितराम् । करोतिरूपम् । तस्मात् घुत्यययोरुपसंख्यानं

न कर्तव्यम् । पुनरवैकार्थ इति द्वितीयो योगः । अत्रापि नवेत्यधिकारात् क्वचिद्वा तेन सामानाधिकरण्येपि शतृशानौ भवतः । सन् घटः । अस्ति घटः । विद्यते घटः । जक्षतु जुहोति बा देवदत्तः । अधीयानो मुनिः । अधीते मुनिः । व्यवस्थितविभाषाबलात् माङ्याक्रोशे लुङपि । मा पचत् । मा पचमानः । मा पाक्षीत् ॥

## संबोधने ॥ १०३ ॥

सम्बोधनमभिमुखीकरणम् । तद्विषये लटः शतृशानौ भवतः वैकार्थत्वे नित्यार्थमिदम् । हे पचमान । उभयोर्द्योत्यं सम्बोधनमिति वाविभक्त्यपि भवति ॥

## लक्षणहेत्वोः क्रियायाः ॥ १०४ ॥

लक्षणं ज्ञापकं चिन्हं हेतुर्जनकः लक्षणं च । या क्रिया क्रियाया हेतुश्च या क्रिया तत्र वर्तमानाद्धोः परस्य लटः शतृशानौ भवतः । शयाना भुञ्जते यवनाः । तिष्ठन्तोऽनुशासति गणकाः । व्यभिचार्य्यपि लक्षणं दृश्यते यथा यत्रासौ काकस्तद्देवदत्तगृहमिति । अन्यथेहैव स्यात् शयाना वर्द्धते दूर्वा । आसीनं वर्द्धते विसम् । हेतौ । अधीयान आस्ते । अर्जयन् वसति । नवेत्यत्र वृतेरिह न भवति । वर्षतीति धावति । हन्तीति पलायते । लक्षणहेत्वोरिति किम् । पचति । जल्पति । क्रियाया इति किम् । यो वेपते सोऽश्वत्थः । यदुत्प्लवते तल्लघु । द्रव्यस्य गुणस्य च लक्षणे न भवतः । इह शास्त्रे अन्यत्र हेतुग्रहणे कारणग्रहणमिति लक्षणग्रहणे च ज्ञापकग्रहणमिति अन्यतरनिर्देशेनोभय-

प्रतिपत्तेर्द्वयोरुपादानं द्वन्द्वेषु अल्पाच्तरमिति पूर्वनिपातव्यभिचारार्थं च ॥

### तौ सत् ॥ १०५ ॥

तौ शतृशानौ सत्संज्ञौ भवतः । शतृशानयोः प्रकृतत्वात् तौग्रहणं शतृशानरूपपरिग्रहार्थम् । तेन लृङादेशयोरपि सत्संज्ञा सिद्धा । देवदत्तस्य कुर्वत् करिष्यत् । उद्ग्रहणेत्यादिना ताप्रतिषेधः ।

### पूङ्यजोः शानः ॥ १०६ ॥

सम्प्रतीति वर्त्तते । पूङ् यज् इत्येताभ्यां शानस्त्यो भवति अलादेशोऽयं कर्त्तर्येव भवति मभाग्भ्योऽपि धुभ्यो विधास्यते । सोमं पवमानः । यजमानः । न शितादिसूत्रे शतृ इत्यतः प्रभृति आतृनो नकारात् तृन्निति प्रत्याहार उक्तः । तेन कर्म्मणि ताप्रतिषेधः ॥

### वयःशक्तिशीले ॥ १०७ ॥

वयस् शक्ति शील इत्येतेषु गम्यमानेषु धोः शानो भवति । शरीरावस्था वयः । कतीह शिखण्डं वहमानाः । कतीह कवचं पर्य्यस्यमानाः । शक्तिः सामर्थ्यम् । कतीह भटं निघ्नानाः । कतीह भुञ्जानाः । शीलं गुणान्तरद्वेषः । कतीह मण्डयमानाः । कतीह मुण्डयमानाः ॥

### धारीङः शत्रकृच्छ्रिणि ॥ १०८ ॥

अकृच्छ्रमनायासो य अस्ति सोऽकृच्छ्री । धारि इङ इत्येताभ्यां शतृत्यो भवति अकृच्छ्रिणि कर्त्तरि । धारयन्

धर्म्मशास्त्रम् । अधीयन् जैनेन्द्रम् । अकृच्छ्रिणीति किम् । कृच्छ्रेण धारयति । कृच्छ्रेणाधीते ॥

द्विषोऽरौ ॥ १०९ ॥

द्विषः शतृत्यो भवत्यरौ कर्तरि । चौरस्य द्विषन् चौरं द्विषन् । द्विषः शतुर्वावचनमिति कर्मणि वा ता । अराविति किम् । द्वेष्टि पतिं भार्या । असमा एते त्या लटं न बाधन्ते ॥

सुञो यज्ञसंयोगे ॥ ११० ॥

संयुज्यते इति संयोगः संयुक्त इत्यर्थः । सुनोतेर्यज्ञसंयोगे कर्तरि शतृत्यो भवति । सर्वे सुन्वन्तः । यज्ञस्वामिन इत्यर्थः । यज्ञसंयोग इति किम् । सुनोति सुराम् ॥

प्रशंसेऽर्हः ॥ १११ ॥

अर्हतेः प्रशंसेऽर्थे शतृत्यो भवति । अर्हन्निह भवान् पूजाम् । अर्हन्निह भवान् विद्याम् । प्रशंस इति किम् । अर्हति चोरो वधम् ॥

आक्वेः शीलधर्मसाधुत्वे ॥ ११२ ॥

आङभिविधौ द्रष्टव्यः । वक्ष्यति ग्रावस्तुवः क्विप् । आ एतस्मात् क्विप्संशब्दनात् यानित ऊर्द्ध्वं वक्ष्यामः शीलधर्म्मसाधुत्वेषु वेदितव्याः । शीलं व्याख्यातम् । धर्म आचारः । ध्वर्थस्य साधुकरणं साधुत्वम् ॥

तृन् ॥ ११३ ॥

तृन्नित्ययं त्यो भवति सर्वधुभ्यः शीलादिषु । शीले कर्ता कटान् । वदिता जनापवादान् । धर्म्मे मण्डयितारः स्राविष्टायना भवन्ति । वधूमूढं अपहर्तारः आहरका भवन्ति । श्राद्धे सिद्धे साधुत्वे कर्ताविकटः गताखेलः गमेरुकज्वद्यते अविकारात्तृन्नपि भवति ॥

**अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतवृध्सहचर इष्णुः ॥ ११४ ॥**

अलङ्कृञित्येवमादिभ्य इष्णुर्भवति शीलादिष । अलङ्करिष्णुः । मण्डनार्थे पूर्वविप्रतिषेधेन युचोऽयं बाधकः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ॥

**ग्लाभूजिस्थः क्स्नुः ॥ ११५ ॥**

ग्ला भू जि स्था इत्येतेभ्यो धुभ्यः क्स्नुर्भवति शीलादिषु । ग्लास्नुः । भूष्णुः । जिष्णुः । स्थास्नुः । स्थोमित्वान्न स्थ ईकारः । ञिजतोरीत्वस्य शासनात् एवभावस्त्रिषु स्मार्यः । स्फुकोनिङ्भङ्केरितः ॥

**त्रसिगृधिधृषिक्षिपः क्नुः ॥ ११६ ॥**

त्रसि गृधि धृषि क्षिप इत्येतेभ्यः क्नुर्भवति शीलादिषु । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः । ध्युङ एप्प्रतिषधार्थं कित्करणमिदं ज्ञापकं त्यादिहलापेक्षया रुसंज्ञायामपि ध्युङ एप् भवतीति । वेत्ता । बोद्धा ॥

**ग्रामित्यामदेर्घिणिन् ॥ ११७ ॥**

इति आद्यर्थे आङभिविधौ शमादिभ्य आ मदेर्घिनिण् भवति । अष्टौ च शमादयः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उन्मादी । उडोत इत्यैप्प्राप्तः न सेटख्यामेोवसिकमिचम इति प्रतिषिद्धः । मदेस्तु भवति । घकारः उत्तरत्र कुत्वार्थः । इकारः उच्चारणार्थः । अन्ये उकारमितं कुर्वन्ति तेषामिह शमिनितरा इति उगितश्चेति वा प्रादेशः प्राप्नोति । आमदेरिति किम् यसिता ॥

## दुहानुरुधदुषद्विषद्रुहयुजत्यजरजभुजाभ्याहनः ॥ ११८ ॥

दुहादिभ्यो घिनिण भवति शीलादिषु । दोही । अनुरोधी । दोषी । द्वेषी । द्रोही । योगी । त्यागी । रज इति सूत्रे निपातनान्नखम् । रागी । भोगी । अभ्याघाती । अकर्मकाणामिति वक्तव्यमिह मा भूत् । गां दोग्धा । शत्रूनभ्याहन्ता ॥

## परेः सृदेविक्षिपरटवददहमुहः ॥ ११९ ॥

परिपूर्वेभ्यः सृप्रभृतिभ्यो धुभ्यः घिनिणभवति । परिसारी । देव देवन इत्यस्य परिदेवी । क्षिपेरविशेषेण ग्रहणम् । परिक्षेपी । परिपाटी । परिवादी । परिदाही । परिमोही ॥

## वौ कषविचलसकत्थस्रम्भः ॥ १२० ॥

विपूर्वेभ्यः कषादिभ्यो धुभ्यः घिनिण् भवति । विकाषी । विवेकी । विलासी । विकत्थी । विस्रम्भी ॥

अपे च लषः ॥ १२१ ॥

अपे च वौ च वाचि लषेर्घिनिण् भवति । अपलाषी । विलाषी ॥

चरेः ॥ १२२ ॥

अप इति वर्तते । अपपूर्वाच्चरेः घिनिण् भवति । अपचारी ॥

अतेः ॥ १२३ ॥

अतिपूर्वाच्चरेर्घिनिण् भवति । अतिचारी ॥

समि पृचिसृजिज्वरः ॥ १२४ ॥

सम्पूर्वेभ्यः पृचि सृजि ज्वरि इत्येतेभ्यो घिनिण् भवति । सम्पर्की । संसर्गी । संज्वरी । अकर्मकाणामित्येव । संपृणक्ति साकम् ॥

आङि यमियसिक्रीडिमुषः ॥ १२५ ॥

आङ्पूर्वेभ्यः यमि यसि क्रीडि मुषि इत्येतेभ्यो घिनिण भवति । आयामी । तासावनिड्भावादैप्प्रतिषेधो न भवति । आयासी । आक्रीडी । आमोषी ॥

प्रे लपसृद्रुमथवद्वसः ॥ १२६ ॥

प्रशब्दे वाचि लप सृ द्रु मथ वद वस इत्येतेभ्यो घिनिण् भवति । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । वसेर उम्विकरणस्य प्रवासी ॥

निन्दहिंसक्लिशखादविनाशव्याभाषा-
सूयो वुञ् ॥ १२७ ॥

निन्दादिभ्यो वुञ् भवति शीलादिषु । निन्दकः क्लिशेरविशेषेण ग्रहणे युचोपि बाधा। क्लेशकः । खादकः। विनाशेर्ण्यन्तस्य विनाशकः। असूय इति कंड्वादिर्यगन्त असूयकः । एवुना सिद्धे वुञ्ग्रहणं ज्ञापकमन्येभ्यः शीलादिषु एवादयो न भवन्तीति ॥

**परौ वादिक्षिपरटः ॥ १२८ ॥**

परिपूर्वेभ्यः वादि क्षिप रट् इत्येतेभ्यो वुञ् भवति । परिवादकः । परिक्षेपकः । परिराटकः ॥

**देविक्रुशो गौ ॥ १२९ ॥**

देवि क्रुश इत्येताभ्यां गौ वाचि वुञ् भवति । देवीति देवतेर्ण्यन्तस्य । परिदेवकः । आदेवकः। परिक्रोशकः । आक्रोशकः । गाविति किम् । देवयिता ॥

**रुचलार्थाद्धेर्युच् ॥ १३० ॥**

रौत्यर्थेभ्यश्चलत्यर्थेभ्यश्च धिसंज्ञकेभ्यः युच भवति । रवणः। शब्दनः। कथनः। चलत्यर्थेभ्यः। चलनः। चोपनः। कम्पनः । धेरिति किम् । पठिता शास्त्रम् ॥

**अनुदात्तेतोऽयसूददीपदीक्षो हलादेः ॥ १३१**

अनुदात्तेतो हलादेर्धेर्युच् भवति यकारान्तसूददीपदीक्ष इत्येतान्वर्जयित्वा । द्योतनः । रोटनः। अनुदात्तेत इति किम्। यष्टा। अयसूददीपदीक्ष इति किम् । क्नूयिता। क्ष्मायिता । सूदेः सकर्म्मकस्यापि सूदिता । कथं मधुसूदनः । नन्द्यादिपाठाल्ल्युः । दीपिता । दीपेर्विशेषेण रा विधास्यते युचः प्राप्तिर्नास्ति । इदं प्रतिषेधवचनं ज्ञापकं

शीलादिकेषु असमविधिर्न भवतीत्यनित्यमेतत् । तेन कमनः । कम्रः । कम्पनः । कम्प्रः । विकत्थी विकत्थनः इति च भवति । दीप्तिता । हलादेरिति किम् । एव इत्येवं शील राविता । आदिग्रहणं हला तदन्तविधिर्मा भूत् इह न स्यात् । जुगुप्सनः । मीमांसनः । धेरेव । वसिता वस्त्रम् ॥

## सृजुज्वलगृधशुचलषपतपदः ॥ १३२ ॥

सृप्रभृतिभ्यो युच् भवति । शरणः । जवणः । ज्वलनः । गर्द्धनः । शोचनः । लषनः । पतनः । पदनः । चल्यर्थानां पदेश्च ग्रहणं सकर्म्मकार्थम् । पदिग्रहणं ज्ञापनार्थमित्यन्ये शीलादिकेषु चासमविधिर्न भवति इति पदेरुकञ् विशेषविहितेन सामान्यविहितस्य युचो बाधितत्वात् पुनरनेन प्रत्यापत्तिः ॥

## क्रुधमण्डार्थात् ॥ १३३ ॥

क्रुध्यर्थेभ्यः मण्डार्थेभ्यश्च धुभ्यः युच् भवति । क्रोधनः । कोपनः । रोषणः । मण्डार्थेभ्यः । मण्डनः । रचनः । भूषणः ॥

## क्रमिद्रमो यङः ॥ १३४ ॥

क्रमिदमिभ्यां यङन्ताभ्यां युच् भवति । चङ्क्रमणः । दन्द्रमणः ॥

## यजिजपिवददशामूकः ॥ १३५ ॥

यङ इति वर्तते । यज्यादिभ्यो यङन्तेभ्यः ऊको भवति । यायजूकः । जञ्जपूकः । दन्दशूकः । वावदूकः ।

जपिदंशिभ्यां लुपसदचरजपजभदहग्रदसोगर्हइति यङ्ज-
यजभदहदशभञ्जपशामितिचस्यनुगमः ॥

जागुः ॥ १३६ ॥

जागुरूको भवति । जागरूकः ॥

लषपतपदस्थाभूवृषहनशृकमगम उकञ् ॥ १३७ ॥

लषादिभ्यः उकञ् भवति । अपलाषुकं नीचसङ्ग-
तम् । अपेचलष इति वचनात् घिनिणपि भवति । प्रपा
तुका गर्भाः । उपपादुकाः देवाः । उपस्थायुको गुरून् ।
प्रभावुकः । प्रवर्षुकः । आघातुकः । शृणाते शारुकः ।
कामुका वन्यस्य स्त्रियो भवन्ति । भष्भतेत्यादिना
कर्म्मणि ताया प्रतिषेधे प्राप्ते उकप्रतिषेधः इत्युक्तः ।
आगामुकः स्वगृहम् ॥

जल्पभिक्षकुट्टलुण्टवृङष्टाकः ॥ १३८ ॥

जल्पादिभ्यो धुभ्यष्टाको भवति । जल्पाकः । जल्पा-
की । अकर्म्मकविवक्षायां रुचलार्थाद्धेर्युजिति युच् प्राप्तः ।
भिक्षाकः । अनुदात्ततो युच् प्राप्तः । कुट्टाकः । लुण्टाकः ।
वराकः ॥

प्रे सृजोरिन् ॥ १३९ ॥

प्रपूर्वाभ्यां सृजुभ्यां इन् भवति । प्रसवी । प्रजवी ॥

परिभूजिदक्षिविश्रीण्वमाभ्यथाम्यमः ॥ १४० ॥

इन्निति वर्तते । परिभू जि दृक्षि विश्रा इण वम
अभ्यथ अभ्यम इत्येतेभ्य इन् भवति । परिभावि । जयी ।

आदरी । त्वर्यी । विश्रयी । अत्यर्यी । वमी । अभ्यर्थी । अभ्यमी ॥

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुः ॥ १४१ ॥

स्पृहिप्रभृतिभ्यो धुभ्यः आलुर्भवति । स्पृहयालुः गृहयालुः । पतयालुः । एते चुरादिष्वदन्ताः । दयालुः निद्रालुः । तन्द्रालुः । तन्निति निपातनमालुविषये न भवति । श्रद्धालुः ॥ इह शीङो ग्रहणं कर्त्तव्यम् । शयालुः ॥

दाधेट्सिशदसदो रुः ॥ १४२ ॥

दा धेट् सि शद सद इत्येभ्यो रुर्भवति । दा इत्य विशेषेण ग्रहणम् । दारुः । धारुः वत्सोमातरम् । नशि तेत्यत्र उकारप्रश्लेषात् तदन्तविधिना तायाः प्रतिषेधः · सेरुः । शद्रुः । सद्रुः । यत्वात्मकर्मणिघतेदारु काष्ठं तद्गुणादिषु द्रष्टव्यम् ।

सृघस्यदः क्मरः ॥ १५३ ॥

सृमरः । घस्मरः । अद्मरः । अनेनैवादेः घसृभावो निपात्यते ॥

भञ्जभासमिदो घुरः ॥ १४४ ॥

भञ्जादिभ्यो घुरो भवति । भञ्जेरात्मकर्म्मण्यभि· धानं भङ्गुरं काष्ठम् । भासुरं ज्योतिः । मेदुरं मुखम् ॥

विद्भिच्छिदः कुरः ॥ १४५ ॥

विद् भिद् छिद् इत्येतेभ्यः कुरो भवति । विदुरः

इति ज्ञानार्थस्यैव । भिच्छिद्देरात्मकर्म्मणि कुरच् इष्यते भिदुरं काष्ठम् । छेदुरा रज्जुः ॥

### सृजीणनशः क्करप् ॥ १४६ ॥

सृ जि इण् नश् इत्येतेभ्यः क्करप भवति । सृत्वरः । जित्वरः । इत्वरः । नश्वरः । नश्वरी ॥

### गत्वरः ॥ १४७ ॥

गत्वर इति निपात्यते गमेः क्करप् मकारस्य त्वं निपात्यते । गत्वरः । गत्वरी ॥

### नमिकम्पिस्म्यजस्कमहिंसदीपो रः ॥ १४८ ॥

नमि कम्पि स्मि अजस कम हिंस दीप इत्येतेभ्यो रो भवति । नमेरात्मकर्म्मण्यपि । नम्रं काष्ठम् । नम्रो देवदत्तः । कम्प्रा शाखा । स्मेरं मुखम् । जस्यतेर्नञ्पूर्वात् अजस्रं ज्ञानं भावयामः । कम्रा युवतिः । हिंस्रः पापमेति । दीप्रो मणिः । कम्पश्च रापर्थत्वात् कमदीप्योरनुदात्तेत्वात् युच् प्राप्तः ॥

### सनाशंसभिक्ष उः ॥ १४९ ॥

सन्नन्त आशंस भिक्ष इत्येतेभ्य उत्यो भवति । चिकीर्षुः । जिहीर्षुः । आङ् शसि इच्छायामित्यस्य आशंसुः । भिक्षुः ॥

### विन्द्विच्छू ॥ १५० ॥

बिन्दु इच्छु इत्येतौ शब्दौ निपात्येते । वेत्तेरुकारः नुमागमश्च निपात्यते विन्दुः । इच्छतीत्येवंशील इच्छुः । उश्छत्वं च निपात्यते ॥

स्वपितृषोर्नजिङ् ॥ १५१ ॥

स्वपितृषिभ्यां नजिङ् भवति शीलादिषु । स्वप्नक् । स्वप्नजौ । तृष्णक् । तृष्णजौ ॥

शॄवन्द्योरारुः ॥ १५२ ॥

शॄ वन्दि इत्येताभ्यां आरु इत्ययं त्यो भवति । शरारुः । वन्दारुः जिनान् ॥

भियः क्रुक्लुकौ ॥ १५३ ॥

बिभेतेः क्रु क्लुक इत्येतौ भवतः । भीरुः । भालुकः । क्रुकोपि वक्तव्यम् । भीरुकः ॥

स्थेशभासपिसकसो वरः ॥ १५४ ॥

स्था ईश भास पिस कस इत्येतेभ्यो वरो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥

यो यङः १५५ ॥

यातेर्यङन्ताद्वरो भवति । यायावरः । वरे अतः खंतस्य यत्वविधिं प्रति न स्थानिवद्भाव इति बलिव्यो-खमिति यखम् । यखे कृते अतः खस्य स्थानिवद्भावादिटि चात्वमिति आत्वं प्राप्तम् । वरे पूर्वादेश च न स्थानिव-द्भाव इति न भवति । शीलादिप्रकरणे धाकृसृजनिन-मिभ्य इकिट् वक्तव्यः । धानशीलो दधिः । करणशीलः चक्रिः । सरणशीलः सस्रिः । जननशीलः जज्ञिः । नमन-शीलः नेमिः । हल्मध्ये लिघतः इति एत्वचखे ॥

ग्रावस्तुवः क्विप् ॥ १५६ ॥

ग्रावपूर्वात् स्तौतेः क्किप् भवति शीलादिषु । ग्रावाणं स्तौतीत्येवंशीलः ग्रावस्तुत् । शीलादिषु वा समविधिर्ज्ञा-स्तीति सामान्यलक्षणः क्किप् न प्राप्नोति पुनर्विधीयते ॥

अन्येभ्योऽपि ॥ १५७ ॥

अन्येभ्योऽपि धुभ्यः शीलादिषु क्किप् भवति । अपि ग्रहणं विकल्पार्थम् । अन्येभ्योपि धुभ्यः शीलादिष्वपि भवत्यशीलादिष्वपि तत्राभिधानवशात् । भ्राजभासधुर्विद्युतेर्जिपृजुभ्यः शीलादिषु क्किप् भवति । अन्येभ्योऽन्यत्र । विभ्रानजशीले विभ्राट् । विभ्राजौ । भाः । भासौ । धूर्वाणः शीलः । धूः धुरौ । विद्युत । विद्युतौ । ऊर्क् ऊर्जौ । पूः । पुरौ । जूः । जुवौ । जुवः । क्विकपिवचिप्रच्छायत तुकटप्रुजुश्रीणां दीरजिश्चेति दीत्वम् । अन्येभ्यो शीलादिषु । पक् । पचौ । भित् । भिदौ । छित् । छिदौ । वाक् । प्रच्छेः प्राट् । आयतस्तूः । कटप्रूः ॥

भुवः खन्तरे ॥ १५८ ॥

भवते क्किप् भवति खावन्तरे च गम्यमाने । मित्रभूः । मित्रभुवौ । मित्रभुवः । अन्तरे । प्रतिभूः । प्रतिभुवौ । प्रतिभुवः । पूर्वेणैव सिद्धे नियमार्थमेतत् खन्तरयोरेव भुवः शीलादिषु नान्यत्र । भविता । भावुकः ॥

विप्रसमोऽखौ डुः ॥ १५९ ॥

शीलादिष्विति निवृत्तम् । सम्प्रतीत्यनुवर्तते एव । विप्रसंपूर्वाड्डोर्भुवो डुर्भवति अखौ । विभुः । प्रभुः । शम्भुः । अखाविति किम् । विभुर्नाम कश्चित् । डुप्रकरणे मितद्रु-प्रभृतीनामुपसंख्यानम् । मितं द्रवति मितद्रुः । शम्भुः ॥

दाम्नीशसयुयुजस्तुतुदसिसिचमिह
पतदशनहः करणे त्रट् ॥ १६० ॥

दाप् लवन इत्येवमादिभ्यः करणे कारके त्रट् भवति । दान्ति तेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । अजादिषु पाठाट्टाप् । नध्री । दंशेः कृतनखस्यनिर्देशो ज्ञापकः क्वचिदन्यत्रापि नखम् । दशनः ।

धात्रपोत्रे ॥ १६१ ॥

धात्रपोत्रइत्येते शब्दरूपे निपात्येते । धेटः कर्म्मणि त्रट् निपात्यते । धयंति तामिति धात्री । पोत्रमिति पुनातेः पवतेर्वा करणे त्रट् निपात्यते । हलस्य सूकरस्य वा मुखं चेद्भवति हलस्य पोत्रम् । सूकरस्य पोत्रम् ।

लूधूसूखनर्तिसहचर इत्रः ॥ १६२ ॥

करण इति वर्तते । ल्वादिभ्यो धुभ्यः करणे इत्रो भवति । लुनाति तेन लवित्रम् । धुवन्ति तेन धवित्रम् । सुवति तेन सवित्रम् । खनित्रम् । अरित्रम् । सहित्रम् । चरित्रम् ।

पुवः खौ ॥ १६३ ॥

करण इति वर्तते । पवतेः पुनातेर्वा करणे इत्रो भवति खुविषये । पूयतेऽनेन पवित्रम् । पवित्रा नाम नदी ।

कर्तरि चर्षिदेवतयोः ॥ १६४ ॥

पुव इत्रो भवति कर्तरि करणे च कारके । ऋषिदेवतयोरभिधेययोर्भिन्नयोगनिर्दिष्टत्वाद्यथासंख्यं न भवति

पूयतेऽनेन पुनाति वा पवित्रो ऽयमृषिः । देवतायां पवित्रोऽर्हन् स मा पुनातु ।

ञीतः क्तः १ १६५ ॥

संप्रतीति वर्तते ञिशब्देनो घोः संप्रति क्तो भवति। ञिमिदा मिन्नः । ञिधृषा । धृष्टः । ञिक्ष्विदा । क्ष्विण्णः ।

मतिबुद्धिपूजार्थाच्च ॥ १३६ ॥

मतिरनुमतिः । बुद्धिर्ज्ञानम् । पूजा अर्चा । मत्यर्थेभ्यः पूजार्थेभ्यश्च धुभ्यः संप्रति क्तो भवति । राज्ञां मतः । राज्ञामिष्टः । राज्ञां बुद्धः । राज्ञां ज्ञातः । राज्ञां पूजितः । राज्ञामर्चितः । क्तयोगे कर्तरि ता प्राप्ता नक्लितेत्यादिना प्रतिषिद्धा भवतीत्यनेन पुनर्विधीयते । चकारोऽनुक्तसमुच्चयार्थः ।

शीलितो रक्षितः क्षांतः आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभौ अभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथा कान्तः दयितान्यः संयतोद्यतौ ।
कष्टभविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥

अमृतशब्दः संप्रति ववहुत्वनिर्देशात् । सुप्तः शयितः स्थितः आसित इत्येवमादयोऽपि संप्रति बोद्धव्याः ।

उणादयो बहुलम् ॥ १६७ ॥

पूर्वः स्वावित्यतो मण्डूकप्लुत्या स्वाविति वर्तते उण् इत्येवमादयस्त्याः संप्रति स्वर्थे बहुलं भवन्ति । खुविषयं क्वचित्त्यसंज्ञा भवति । कृवापाजिमिस्वदिसाध्यशूभ्य उण् । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः क्वचित्त्यसंज्ञा न भवति । कृधूभ्य-

क्सरः । कृसरः । धूसरः त्यसंज्ञाविरहात्यादेशयोरिति षत्वं न भवति । इह च शंखः शंठः इति इरा न भवति । क्वचिदुभयथा । नृदवदिहनिकमिकासिभ्यः सः । वसम् । तसम् । एपम्प्रति त्यसंज्ञा षत्वं प्रति नास्ति । इह च षण्ड इति प्रकृतिकार्यं ष्वादिमत्वं न भवति । उक्तं च ।

क्वचित्प्रवृत्तिः क्वचिदप्रवृतिः क्वचिद्विभाषा क्वचिदन्यदेव ।

विधेर्विधानं वहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

तथा अनुक्ताभ्योपि प्रकृतिभ्यस्त्या भवन्ति । अण्डः जृकृसृवृङः जरण्डः । करण्डः । सरण्डः । वरण्डः । आदिई-तैरपीष्यते एरण्डः । अनुक्ता अपि त्या भवन्ति ञफिडः ञफण्डः इत्येवमादिषु । तथा संप्रतिकाले उणादयो विहिताः क्वचिद्भूतेऽपि दृश्यन्ते कषितोऽसौ कषिः । ततःसौ तन्तिः । भसितं भस्म । चरितं चर्म्म । वृत्तं तदिति वर्त्म । तदुक्तं बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषां कार्यमशेषविधश्च तदुक्तं नैगमरूढभवं हि सुसाधु जात्यपेक्षयैकत्वं तनुदृष्टेरिति एवमेव-कर्म्मणि का तनुदृष्टिं प्रेक्ष्य तनुदृष्टेः प्रकृतेस्तनोर्गुणस्य दर्शनादित्यर्थः । तद्बाहुलकमुक्तम् । एवं हि नैगमाः गौरित्येवमादयः रूढिभवाः पलाश इत्येवमादयः शब्दा सुसाधवो भवन्ति ।

इत्यभयनन्दिविरचितायां जैनेन्द्रमहावृत्तौ द्वितीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥ * ॥

ॐनमः ॥

## गम्यादिर्वर्त्स्यति ॥ १ ॥

उणादयो अन्यत्र च ये साधिता गम्यादयः शब्दास्ते च वर्त्स्यति काले साधवो भवन्ति वर्त्स्यतीत्यनागतस्य कालस्य सामान्येन ग्रहणं संप्रत्त्यादिकाले तेषां साधुत्वव्यवच्छेदार्थ आरम्भः । गमिष्यति गमी ग्रामम् । आगमिष्यति आगमी नगरम् । आधमर्ण्ये चेन इति कर्म्मणि तायाः प्रतिषेधात् कर्म्मणावाति इवेव भवति । एवं भविष्यति भावी । प्रस्थास्यते प्रस्थायी । प्रतिभोत्स्यते प्रतिबाधी । प्रतियोत्स्यते प्रतियोगी । प्रयास्यति प्रयायी । गमेरिन्निति इन् । स एव आङि णिदिति णिन् । भुवश्चेति भवतेरपि णिन् । अन्येभ्यः सुपि शीले जातौ णिनिति णिन् । कथं स्वागमो ग्रामं अनद्यतने लुङिति लुङ्प्राप्तेः तदसद्यतो वर्त्स्यतीत्यनेन सामान्यशब्देनानद्यतनविशेषोप्यगृहीतो यथा गौरित्यनेन खण्डमुण्डोऽपि अतो वर्त्स्यतीत्यविशेषणवृत्तावप्यर्थकरणादविशेषप्रतिपत्तिः । अथवा अनद्यतने लुङित्यत्र गम्यादिर्वर्त्स्यतीत्येतदनुवर्तिष्यते तेनानद्यतनविषयेपि गम्यादयः सिद्धा भवन्ति असमाद्वा अनद्यतने भवन्ति । लुङ्लृटावपि भवतो गमिष्यति गन्तेति ॥

## पुरायावतोर्लट् ॥ २ ॥

पुरा च यावच्च पुरायावतौ तयोः पुरायावच्छब्दयोर्वाचो वर्त्स्यतिधोर्लट् भवति । पुरा भुङ्क्ते । यावदधीते । भविष्यदनद्यतने लृटोऽयमपवादो लट् । लङपि लृडपवादः तत्रापवादयोः स्पर्द्धे परत्वाल्लुट् प्राप्तः पूर्वनिर्णयेन लट्

भवति । श्वः पुरा ऽधीते । श्वो यावदधीते । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येत्यभिधानात् । तेनेह न भवति । यावद्दास्यति तावद्भोक्ष्यते महत्या पुरा जेष्यति ॥

## वा कदाकर्ह्योः ॥ ३ ॥

कदा कर्हि इत्येतयोर्वाचोर्वर्त्स्यति धोर्वा लट् भवति । कदा भुङ्क्ते । कदा भोक्ष्यते । कदा भोक्ता । कर्हि भोक्ष्यते । कर्हि भोक्ता ॥

## किंवृत्ते लिप्सायाम् ॥ ४ ॥

किमो वर्तनं किंवृत्तं तस्मिन् वाचि लिप्सायां गम्यमानायां वर्त्स्यति वा लट् भवति । लृटि लुटि च प्राप्ते अयमारम्भः लब्धुमिच्छा लिप्सा प्रार्थनाभिलाषः को भवद्भ्यो भिक्षां ददाति । को भवद्भ्यो भिक्षां दास्यति । को भवद्भ्यो भिक्षां दाता । इह कस्मान्न भवति । कदा भोजयिष्यसि भोजयितासि वा । किमो हि विभक्त्यन्तस्य डतरडतमान्तस्य च वर्तनं किंवृत्तमिति वैयाकरणानामभिप्रायः । तच्चेह नास्ति ततोऽत्र लटोऽभावात् लड्लुटावेव भवतः । लिप्सायामिति किम् । कः पाटलिपुत्रं यास्यति ।

## लिप्स्यसिद्धौ ॥ ५ ॥

वर्त्स्यतीत्यनुवर्तते लिप्सति हि लिप्स्यो दाता ओदनादिश्च तत्र दातरि तात्मो लिप्स्यस्य सिद्धिः लिप्स्यसिद्धिःयाचकेन हि यो लिप्स्यते दाता तस्य सिद्धौ स्वर्गादिफलप्राप्तौ ओदनादौ तु भासः । याचकेन हि यो लिप्स्यते ओदनादिना करणभूतेन सिद्धिः दातुः स्वर्गादिफलप्राप्तिः तस्यां गम्यमानायां वर्त्स्यति वा

लट् भवति । यो भवद्भ्यो भिक्षां ददाति दाता वा स स्वर्गलोकं गच्छति गमिष्यति गन्ता वा । दानाद्दातुः स्वर्गसिद्धिं ब्रुवाणो दातारमेवमुत्साहयति । ननु चात्र उभयत्रापि लिप्साया गम्यमानत्वात् किंवृत्ते लिप्सायामित्येव लट्विकल्पसिद्धेर्व्यर्थोऽयमारम्भः । न व्यर्थः किंवृत्तार्थत्वादेतदारम्भस्य । पूर्वेण हि किंवृत्ते वाचि लट्विकल्पो विहितः ।

**लोडर्थलक्षणे ॥ ६ ॥**

वर्त्स्यतीति वेति च वर्तते । लोडर्थः प्रैषादिः स लक्ष्यते अनेन लोडर्थलक्षणं तस्मिन् लोडर्थलक्षणे ध्वर्थे वर्तमानात् धोर्वर्त्स्यति वा लट् भवति उपाध्यायश्चेदागमिष्यति । उपाध्यायश्चेदागन्ता । अथ त्वं तर्कमधीष्व अथ गणितमधीष्व । अत्रोपाध्यायागमनेन प्रैषो लक्ष्यते ।

**लिङ् चोर्द्ध्वमौहूर्तिके ॥ ७ ॥**

वेति वर्तते । लोडर्थलक्षण इति । ऊर्द्ध्वं मुहूर्ताद्भव काल ऊर्द्ध्वमौहूर्तिकः निपातनात्सविधिरुत्तरपदस्यैप् ऊर्द्ध्वमौहूर्तिके वर्त्स्यति काले लोडर्थलक्षणे वर्तमानाद्धोर्लिङ् भवति लट् वा । ऊर्द्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् उपाध्यायश्चेदागच्छति उपाध्यायश्चेदागमिष्यति उपाध्यायश्चेदागन्ता अथ त्वं तर्कमधीष्व अथ त्वं गणितमधीष्व ।

**वुण्तुमौ क्रियायां तदर्थायाम् ॥ ८ ॥**

वर्त्स्यतीत्येव वर्तते । यस्माद्धोः क्रियोत्पत्तिः प्रार्थ्यते तद्वाच्यक्रिया तच्छब्देनाभिप्रेता सा क्रिया अर्थः

प्रयोजनं यस्या व्रजनादिक्रियायाः सा तदर्था तस्यां वाचि वर्त्स्यति काले वुण्तुमौ भवतः । कारको व्रजति । कर्तुं व्रजति । भोजको व्रजति । भोक्तुं व्रजति । क्रियायामिति किम् । भिक्षिष्ये इत्यस्य जटाः । अध्येष्ये इत्यस्य कमण्डलुः । द्रव्यमत्र तदर्थम् । तदर्थायामिति किम् । धावतस्ते पतिष्यति दण्डः । नात्र धावनं दण्डपतनार्थम् । ननु सामान्यविहितेन एवुना सिद्धं किमर्थं वुण्विधीयते झिकृते भान्तौ भवतीति भिन्नविषयत्वात्तुमपि न बाधकः क्रियायां तदर्थायां वाचि लृड् वक्ष्यते स बाधकः स्यात् वासमविधिना एवुर्भविष्यतीति चेत् एवं तर्हि नियमार्थं वुण्वचनं वर्त्स्यति क्रियायां तदर्थायां वाचि वुणेव यथा स्यात् तृजादयो मा भूवन् इति कर्ता व्रजति विक्षिरो व्रजति इत्येवमादि न भवति ॥

## भाववाचिनः ॥ ९ ॥

भाववाचिनो घञादयः ते वर्त्स्यति काले क्रियायां तदर्थायां वाचि भवन्ति । यद्यपि सामान्येन विहिता घञादयस्तथापि वुणग्रहणं ज्ञापकमुक्तं सामान्यविहितास्त्याः वर्त्स्यति काले क्रियायां तदर्थायां न भवन्तीति तुमा च बाध्येरन् । तेनायं यत्नः । पाकाय व्रजति । मतये व्रजति । पुष्टये व्रजति । तुमर्थाद् भाव इत्यप् । भाव इति किम् । षणे न । वाचि ग्रहणं किमर्थम् । यकाभ्यः प्रकृतिभ्यो येन विशेषणेन त्या विहितास्ताभ्यः प्रकृतिभ्यो तेन विशेषणेन क्रियायां तदर्थायां वाचि यथा स्युरित्येवमर्थम् ॥

## कर्म्मणि चाण् ॥ १० ॥

कर्म्मणि वाचि तदर्थायां च क्रियायामण् भवति । पूर्वेण वुण्प्राप्तः । वाऽसमविधिश्च नास्तीत्युक्तम् एन् स्यात् तेनायमारम्भः । कुम्भकारो व्रजति । काण्डलावो व्रजति । वाचि ग्रहणानुवृत्तेः यथाविहितमण् भवति इति कर्म्मण्येव वाचि भविष्यति । कर्म्मग्रहणं किमर्थम् अपवादविषयेऽपि यथा स्यादित्येवमर्थः । गोदायो व्रजति । तुषपायी व्रजति । क्रियायां तदर्थायामनुवर्तते । चकारः किमर्थः केवले कर्म्मणि केवलायां च क्रियायां वाचि मा भूत् । प्रत्येकमीपा निर्देशात् बावसः ।

## लृट् ॥ ११ ॥

लट् भवति क्रियायां तदर्थायां वाचि । करिष्यामीति व्रजति । उदाहरणे इति शब्दः हेतुहेतुमद्भावद्योतनार्थः ।

## शेषे ॥ १२ ॥

उक्तादन्यः शेषः शुद्धं वर्त्स्यत् कालमात्रं शेषे वर्त्स्यति लट् भवति । करिष्यति । हरिष्यति ॥

## विभाषा लृटः सत् ॥ १३ ॥

वर्त्स्यति लट् तस्य स्थाने सत्संज्ञौ शतृशानौ विभाषया भवतः। पक्ष्यन्तं पश्य । पक्ष्यमानं पश्य । पक्ष्यता कृतम् हेपक्ष्यन् । हे पक्ष्यमाण । अर्जयिष्यति वसति । अध्येष्यमाण आस्ते । देवदत्तः पश्यति पक्ष्यति वा पक्ष्यमाणः पक्ष्यते वा । व्यवस्थितविभाषेयम् । तेन द्वयादिभिर्योगे सम्बोधने लक्षणहेतोः क्रियायां वत्यत्र नित्यो विधिः॥ वातैकार्थत्वे विकल्पः । इतिशब्दयोगे तु न भवति ।

करिष्यामीति व्रजति । हरिष्यामीति व्रजति । लृट्ग्रहणं किम् । त्यान्तरत्वं मा विज्ञायि ।

**अनद्यतने लुट् ॥ १४ ॥**

वर्त्स्यतीति वर्तते । वर्त्स्यत्यनद्यतने ध्वर्थे वर्तमानाङ्धोर्लुट् भवति । श्वः कर्ता । श्वोऽध्येता । अनद्यतन इति वसनिर्देशादद्य श्वो भोक्ष्यामहे इत्यत्र न भवति । विभाषानुवर्तनात् परिदेवने लटविषयेऽपि लुट भवति । इयन्तु कदा गन्ता एवं निदधती पादौ । अयं तु कदाध्येता एवमनभियुक्तः ॥

**पदरुजविशस्पृशो घञ् ॥ १५ ॥**

पद रुज विश स्पृश इत्येतेभ्यो घञ् भवति । पद्यतेऽसौ पादः । एवुतृचोरयमपवादो न पचाद्यचः सुस्मिडतं पदमिति पदनिर्देशात् । रुजत्यसौ रोगः । विशत्यसौ वेशः । इगुङ्लक्षणस्यापवादः । स्पृश उपतापेऽभिधानम् । स्पृशतीति स्पर्शो रोगः । उपतापादत्यत्र स्प्रष्टा स्पर्शकः ॥

**सृ स्थिरे ॥ १६ ॥**

सरतेः स्थिरे कर्तरि घञ् भवति । कालान्तरं सरतीति सारः । मधूकसारः । विभाषानुवर्तनात् स्थिरव्याधिमत्स्यबलेष्वभिधानम् । अतिसारो व्याधिः । विसारो मत्स्यः । सारो बलम् । एतेष्विति किम् । सर्ता । सारकः ॥

**भावे ॥ १७ ॥**

भावे धोर्घञ् भवति । भाव इति क्रियासामान्यं धात्वर्थः तद्यद्यपि पूर्वापरिभूतमपरिनिष्पन्नमलिङ्गसंख्यं प्रकृत्यैवोच्यते तथापि यस्तस्यासिद्धताधर्म्मः स लिङ्गसंख्यावानिति तत्र घञादयः । पाकः । त्यागः । रागः ॥

## अकर्तरि ॥ १८ ॥

कर्तुरन्यस्मिन् कारके घञ् भवति । नञ्युक्तमिव युक्तं वा यत्कार्यं संप्रतीयते तुल्याधिकरणे ऽन्यस्मिन् लोके ऽप्यर्थगतिस्तथा प्रास्यन्ति तं प्रासः । प्रसीव्यंति तं प्रसेवः । आहरन्ति तस्मादाहारः । संज्ञायामसंज्ञायामपि दृश्यते । को भवता दायो दत्तः । कें भवता लाभो लब्धः । कर्तव्यः कटः । कृतः कटः इत्येवमादिषु अनभिधानात् भवति ।

## परिमाणाख्यायां सर्वेभ्यः ॥ १९ ॥

आख्याग्रहणात्परिमाणमिह संख्यादिके गृह्यते । परिमाणस्याख्यायां गम्यमानायां सर्वेभ्यो घञ् भवति । एकस्तण्डुलनिचायः । एकस्तण्डुलावचायः । द्वौ केदार लावौ । वीजकारौ ग्रहृद्दगमोर्जिति अचि प्राप्ते इदम् । परिमाणाख्यायामिति किम् । निश्चयः । सर्वग्रहणं वाधकबाधनार्थम् । एकस्तृणविघासः । अन्यथा पुरस्तादपवादो ऽयमिति अनन्तरमेवाचं वाध्येत न व्यवहितं नैा णश्चेति णम् । घञि घस्लृभावः सिद्धः । इहाकर्तरीत्येवाभिसंवध्यते । स्त्रीलिङ्गे भावे घञ् भवेत् । एका तिलोच्छ्रितिः । द्वे श्रुती । सर्वग्रहणं बाधकबाधनार्थमुक्तं क्तरवाध्येत ॥

इङः ॥ २० ॥

इत उत्तरं भावे अकर्तरीति च वर्तते । इङश्च घेर्घञ् भवति । अधीयते इत्यध्यायः । उपेत्याधीयतेऽस्मादित्युपाध्यायः । अपादाने यो घञ् तदन्ताद्वा ङीर्वक्तव्यः । उपाध्यायी । उपाध्याया । वृद्धकुमारीवरवाक्यन्यायेनास्मिन्विषये क्तिमपि घञ् बाधते । शृणातेर्वायुवर्णयोर्घञ् वक्तव्यः । शारो वायुः । शारो वर्णः ॥

गौ रुवः ॥ २१ ॥

गिसंज्ञे वाचि रौतेर्घञ् भवति । विरावः । संरावः । अचोऽपवादोऽयम् । गाविति किम् । रवः ॥

समि युद्रुदुवः ॥ २२ ॥

संपूर्वेभ्यः यु द्रु दु इत्येतेभ्यो घञ् भवति । संयावः । संद्रावः । संदावः । समीति किम् । यवः ॥

यज्ञे स्तुवः ॥ २३ ॥

समीति वर्तते । सम्पूर्वात् स्तौतेर्घञ् भवति यज्ञविषये । समेत्य स्तुवन्ति अस्मिन्निति संस्तावः छन्दोगानम् । यज्ञ इति किम् । सतां संस्तवः ॥

श्रिणीभुवोऽगौ ॥ २४ ॥

अगिपूर्वेभ्यः श्रि णी भू इत्येतेभ्यः घञ् भवति । श्रायः । नायः । भावः । अगाविति किम् । प्रश्रयः । प्रणयः । प्रभवः । कथं प्रभावो धर्मस्य । प्रकृष्टो भावः प्रभावः इति प्रादिसः । कथं षाड्गुण्यस्य यथावत्प्रयोगो यथावत्प्रयोगोनयः पुंस्वैघः । प्रायेणेति करणे घो द्रष्टव्यः ॥

नियोऽवोदोः ॥ २५ ॥

अव उद् इत्येतयोर्वाचोर्नयतेर्घञ् भवति। अव-नायः। उन्नायः। कथमुन्नयः। शब्दानां पूर्ववत्करणे घो विधेयः॥

निरभ्योः पूल्वोः ॥ २६ ॥

निस् अभि इत्येवंपूर्वाभ्यां पू लू इत्येताभ्यां यथा-संख्यं घञ् भवति। पू इति सामान्येन ग्रहणम्। निष्पावः। अभिलावः। निरभ्योरिति किम्। पवः। लवः॥

उन्न्योर्ग्रः ॥ २७ ॥

उद् नि इत्येवंपूर्वात् गृ इत्येतस्मात् घञ् भवति। गृइति सामान्येन ग्रहणम्। उद्गारः। निगारः॥

कॄ धान्ये ॥ २८ ॥

उन्न्योरिति वर्त्तते। कॄ इत्येतस्माद्धोः उद्निपूर्वात् घञ् भवति धान्यविषये। उत्कारो धान्यस्य। निकारो धान्यस्य। धान्य इति किम्। पुष्पोत्करः। पुष्पनिकरः॥

प्रे द्रुस्तुस्रुवः ॥ २९ ॥

प्रशब्दे वाचि द्रु स्तु स्रु इत्येतेभ्यो घञ् भवति। प्रद्रावः। प्रस्तावः। प्रस्रावः। प्र इति किम्। द्रवः॥

स्त्रोऽयज्ञे ॥ ३० ॥

प्र इति वर्तते। प्रपूर्वात् स्तॄइत्येतस्मात् घञ् भवति अयज्ञविषये। शंखप्रस्तारः। मणिप्रस्तारः। ऋकारान्त-त्वादप्राप्त इदम्। अयज्ञ इति किम्। बर्हिष्प्रस्तरः। इट्द्रवोत्यप्युम्मुहुस इति सम्बध्यते॥

## प्रथने वावशब्दे ॥ ३१ ॥

प्रथनं विस्तीर्णता विपूर्वात्स्तॄ इत्येतस्मात् घञ् भवति अशब्दविषये प्रथने। पटस्य विस्तारः । गृहस्य विस्तारः । प्रथन इति किम् । तृणविस्तरः । अशब्द इति किम् । वाक्यविस्तरः ॥

## च्छन्दः खौ ॥ ३२ ॥

छन्दः पद्ये वर्णविन्यासः । छन्दःसंज्ञायां च विपूर्वात् स्तृणातेः घञ् भवति। विस्तारः पंक्तिछन्दः। विस्तारः बृहतिछन्दः । षत्वप्रकरणे विस्तार इति निपातनादेव सिद्धे छन्दःसंज्ञाज्ञापनार्थमिदम् ॥

## त्तुश्रुवः ॥ ३३ ॥

वाविति वर्तते। त्तु श्रु इत्येताभ्यां विपूर्वाभ्यां घञ् भवति! विक्षावः। विश्रावः। वावित्येव । त्तवः । श्रवः।

## उदि ग्रहः ॥ ३४ ॥

उत्पूर्वाद् ग्रहेर्घञ् भवति । उद्ग्राहः। अचोऽपवादोऽयम् ॥

## समि मुष्टौ ॥ ३५ ॥

संपूर्वाद् ग्रहेर्घञ् भवति मुष्टिविषये। शाकमुष्ट्यादौ परिमाणवचनः मुष्टिशब्दः। तत्र परिमाणाख्यायामित्येव सिद्धं ततोन्यदुदाहरणम् । अहो मल्लस्य संग्राहः। अहो मौष्टिकस्य संग्राहः। मुष्टेर्दार्ढ्यमित्यर्थः । मुष्टाविति किम् । संग्रहः शास्त्रस्य ॥

## न्यायपरिणायपर्य्यायः ॥ ३३ ॥

न्यायादयः शब्दाः निपात्यन्ते । निपूर्वादिणः अभ्रेषे घञ् निपात्यते । अभ्रेषो युक्तकरणमकुत्सा वा । एषोऽत्र न्यायः । अभ्रेष इति किम् । न्ययं गतश्चौरः । परिपूर्वात् नयतेर्द्यूतविषये घञ् निपात्यते । परिणायेन-सारान् हन्ति । द्यूतविषयादन्यत्र परिणयः । परिपूर्वादिणः अनुपात्यये गम्यमाने घञ् निपात्यते । अनुपात्ययः क्रमप्राप्तस्यानतिवृत्तिः । तव पर्यायो भोक्तुम् । अनुपात्यय इति किम् । स्वाध्यायकालस्य पर्ययः । अतिक्रम इत्यर्थः ॥

## व्युपे शीङोऽन्त्ये ॥ ३७ ॥

अन्त इति पूर्वसूत्रे विन्यासापेक्षया पर्यायो ऽभिप्रेतः वि उप इत्येतयोर्वाचोः शीङः घञ् भवति पर्याये गम्ये । तवविशायो मम विशायः । तव राजोपशायः । राजान-मुपशाययितुमवसर इत्यर्थः । अन्त इति किम् । विशयः । उपशयः ॥

## हस्तादाने चेरस्तेये ॥ ३८ ॥

हस्तादाने गम्यमाने चिनोतेर्घञ् भवति न चेत्स्तेयं भवति । पुष्पप्रचायः । फलप्रचायः । हस्तादानशब्देन निकटस्य गुच्छादेर्ग्रहणं लक्ष्यते । हस्तादान इति किम् । पुष्पप्रचयः । अस्तेय इति किम् । पुष्पप्रचयं करोति चौर्येण ॥

## निवासचितिशरीरोपसमाधाने चः कः ॥ ३९ ॥

चेरिति वर्तते । निवास चिति शरीर उपसमाधान इत्येतेष्वर्थेषु चिनोतेर्घञ् भवति चकारस्य च ककारः । निवासे । साधुनिकायः । उत्कृष्टनिकायः । अधिकरणे घञ् । चीयतेऽसौ चितिः । यज्ञे अग्निविशेषः । अकायमग्निं चिन्वीत । शरीरे । चीयते इति कायः । उपसमाधानमुपर्युपरि राशीकरणम् । महान् गोमयनिकायः । उपर्युपरीति विशेषणादिह न भवति । महान् काष्ठनिचयः । एतेष्विति किम् । चेयः ॥

## सङ्घेऽनूर्द्ध्वे ॥ ४० ॥

संघः प्राणिविशेषसमुदायः । अनूदर्ध्वे संघे वाच्ये चिनोतेर्घञ् भवति चकारस्य च कत्वम् । निचीयते इति निकायः । पण्डितनिकायः । प्राणिविशेषस्य ग्रहणादिह न भवति । काष्टचयः । पदसमुच्चयः । विशेषग्रहणं किम् । प्राणिसमुच्चयः । सामान्येन समुदायोऽयम् । अनूदूर्ध्वं इति किम् । उपर्युपरि सूकरनिचयः ।

## आक्रोशे वन्योर्ग्रहः ॥ ४१ ॥

आक्रोशः शपनम् । अव नि इत्येतयोर्वाचोर्ग्रहेर्घञ् भवति आक्रोशे गम्ये । अवग्राहो ह ते वृषल भूयात् । निग्राहो ह ते वृषल भूयात् । आक्रोश इति किम् । अवग्रहः पदस्य । निग्रहो दुष्टस्य ॥

## प्रे लिप्सायाम् ॥ ४२ ॥

प्रशब्दे वाचि लिप्सायां गम्यमानायां ग्रहेर्घञ् भवति । प्रग्राहेण चरति भिक्षुः । पात्रं प्रगृह्य अन्नं लिप्सु-

भ्रमतीत्यर्थः । लिप्सायामिति किम् । प्रग्रहो देवदत्तस्य राज्ञा ॥

परौ यज्ञे ॥ ४३ ॥

परिपूर्वाद्ग्रहेर्घञ् भवति यज्ञविषये । उत्तरः परिग्राहः । यज्ञ इति किम् । परिग्रहो देवदत्तस्य ।

नौ वुर्धान्ये ॥ ४४ ॥

निशब्दे वाचि वृ इत्येतस्मात् घञ् भवति धान्यविशेषे वाच्ये । वृ इति वृङ्वृञोर्ग्रहणम् । नीवारा नाम व्रीहयो भवन्ति । धान्य इति किम् । निवृत इति निवरा कन्या ॥

उदि पूद्रुयौतिश्रिञः ॥ ४५ ॥

उत्पूर्वेभ्यः पू द्रु यौति श्रिञ् इत्येतेभ्यः घञ् भवति । उत्पावः । उद्द्रावः । उद्यावः । उच्छ्रायः ॥

वाङि रूप्लुवोः ॥ ४६ ॥

आङ्पूर्वाभ्यां रु प्लु इत्येताभ्यां वा घञ् भवति । आरावः । आरवः । गौरुव इति नित्यं घञ् प्राप्तः । आप्लावः । आप्लवः ॥

ग्रहोऽवे वर्षप्रतिबन्धे ॥ ४७ ॥

वेति वर्त्तते । अवशब्दे वाचि ग्रहेर्वा घञ् भवति वर्षप्रतिबन्धे वाच्ये । अवग्राहो देवस्य । अवग्रहो देवस्य । वर्षप्रतिबन्ध इति किम् । अवग्रहः पदस्य ॥

प्रे वणिजाम् ॥ ४८ ॥

वेति वर्तते । प्रशब्दे वाचि ग्रहेर्वा घञ् भवति समुदायेनाभिधेयं वणिजां सम्बन्धि चेद्भवति । तुला-